# शिवराज-विजय-कुञ्चिका

(शिवराज-विजय के द्वादश निश्वासों की सर्वोत्तम कुञ्चिका)

(परिवर्धित परीक्षोपयोगी संस्करण)

लेखक तथा सम्पादक

परमानन्द शास्त्री

व्या० साहित्य शास्त्री, साहित्यरत्न

प्रिंसीपल

श्री सनातन धर्म संस्कृत कालेज

होशियारपुर (पंजाब)



प्रकाशक

**भारतीय संस्कृत भवन**

माई हीरां गेट, जालन्धर शहर 144008

प्रकाशक :
कृष्णानन्द शास्त्री,
भारतीय संस्कृत भवन
माई हीरां गेट
जालन्धर शहर ।

संशोधित-परिवर्धित सप्तम संस्करण 1986

मूल्य : Rs. 10/- पैसे

मुद्रक :
सिक्का कम्पोजिंग हाउस, जालन्धर ।
गायत्री प्रिंटर्ज
जालन्धर ।

# विषय-सूची

यदीय मुखपदम् पुञ्जमधिगत्य गुञ्जद्दलन्-
मिलिन्दक-कदम्बकोऽधर मरन्दमास्वादते ।
यदक्षियुगलाम्बुज मुदित-खञ्जनी-गञ्जने ।
समेत्य हृदि साऽनिशं दिशतु शारदा ससृतिम् ।।

प्रणम्य शिरसा देवीं, वीणापुस्तक-धारिणीम् ।
छात्राणां सुखबोधाय, कुञ्चिकेयं कृता मया ।।

उन निराश, कोमल बुद्धि छात्रों
जिन्हें सफलता साथ नहीं देती,
यह शिवराज-विजय कुञ्चिका
सस्नेह भेंट है ।

सरिता परीक्षा के लिए यह कुञ्चिका तरणी बने ।
हो यत्न मेरा सफल अनुपम, छात्र हों सुख से सने ।।
सर्वस्तरतु दुर्गाणि, सर्वः भद्राणि पश्यतु ।
सर्वः कामानवाप्नोतु, सर्वः सर्वत्र नन्दतु ।।

परमानन्द शास्त्री

# भूमिका

श्री अम्बिकादत्त व्यास कृत "शिवराजविजय" राष्ट्रीय-भावना तथा देश-भक्ति से पूर्ण ऐतिहासिक गद्यकाव्य है। सरल सुबोध शैली में छात्रों के हृदय में राष्ट्रभक्ति तथा 'जननी जन्मभूमिश्च, 'स्वर्गादपि गरीयसी' की भावना का सन्देश देने वाला यह अनुपम वीररस पूर्ण संस्कृत गद्य-काव्य है।

इसकी ऐतिहासिक उपादेयता तथा देशप्रेम, जातिप्रेम, धर्मप्रेम, आदि विशेषताओं के कारण ही सभी प्रान्तों की संस्कृत परीक्षाओं में यह पाठ्यपुस्तक निर्धारित है। तथापि छात्रों के लिए शिवराज-विजय की सहायक पुस्तक में कोई गति नहीं आई। अपने जीवन के अध्यापन काल में तथा छात्र जीवन में भी यह अभाव मुझे खटकता रहा।

संस्कृत के छात्र पात्रों के चरित्र-चित्रण करने में, निश्वासों की कथा लिखने में संस्कृत माध्यम से काव्य से सम्बन्धित अन्यान्य समालोचनात्मक प्रश्नों के उत्तर लिखने में सर्वाधिक कठिनाई अनुभव करते हैं। इसका मुख्य कारण है उन्हें मार्गदर्शन युगानुकूल नहीं मिलता।

यहां तक कि वे सन्दर्भ सहित व्याख्या लिखने में भी गुमराह हो जाते हैं; अतः छात्रों को मार्गदर्शन देने के लिए कुछ लिखने की इच्छा मेरे मन में कई बार उत्पन्न हुई। परन्तु श्री कृष्णानन्द जी शास्त्री के सदुत्साह और सत्प्रेरणा से ही मेरी इच्छा-लता पुष्पित और पल्लवित हुई है। कुछ समयाभाव के कारण विषय में निखार तथा भाषा-शिल्प एवं कुछ और वस्तुएं मेरी इच्छानुकूल न हो सकीं।

भाषा हमने जान-बूझ कर ऐसी लिखने की चेष्टा की है कि छात्र अनुभव करें कि भाषा मेरी ही है और परीक्षा में लिखने पर परीक्षक को

यह जान पड़े कि छात्रों ने परीक्षा भवन में बैठ कर ही शब्द-योजना वाक्य-विन्यास बनाया है !

छात्रों ने इसका पूर्ण रूप से स्वागत किया है। इसका नवीनतम छठा संस्करण इससे भी सुन्दरतम् भेंट कर रहे हैं।

अन्त में मैं पुनः पं० कृष्णानन्द जी शास्त्री, भारतीय संस्कृत भवन जालन्धर का अति कृतज्ञ हूं, जिन्होंने सत्प्रेणा देकर तथा बड़ी लगन से इसे प्रकाशित किया है।

पं० पशुपति झा जी प्राध्यापक पं० वि० विद्यालय, साधु आश्रम का मैं किन शब्दों में धन्यवाद करूं जिन्होंने अपने विचारों से सदैव हमें उत्साहित किया।

परमानन्दः

# शिवराज-विजयस्य परिचयः

शिवराजस्य विजयमधिकृत्य कृतो ग्रन्थः शिवराजविजयो नाम। गद्यकाव्येषु चैतत्काव्यं, आख्यायिका नाम काव्यं विद्यते।

तल्लक्षणं यथा—आख्यायिका कथावत्स्यात् कवेर्वंशादिकीर्तनम्।
अस्यामन्य-कवीनाञ्च तथा वृत्तं क्वचित् क्वचित्॥
कथांशानां व्यवच्छेद आश्वास इति कथ्यते।
आर्यावक्त्रापवक्त्राणां छन्दसा येन केनचित्॥
अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम्।

एवं लक्षणानुसारेणैव, ग्रन्थमध्ये क्वचित् क्वचित् पद्यानि, कथांश-संकेताश्चेत्यादीनि आख्यायिकालक्षणानि ग्रन्थे विद्यन्ते। यद्यपि कवेर्वंशानु-कीर्तनाभावः खलादेर्वृत्तकीर्त्तनाभावश्च शिवराजविजयस्य कथात्वं प्रकटयति तथापि कथांशव्यवच्छेदकाः निश्वासाः कथायां न भवन्ति आख्यायिकायामेव दृश्यन्ते, अत एवास्य ग्रन्थस्याख्यायिकात्वमेव स्वीकरणीयमिति।

अम्बिकादत्त-व्यास-कृत-शिवराज विजयस्य द्वादश निश्वासाः सन्ति। अस्मिन् ग्रन्थे निश्वास चतुष्टयात्मकाः त्रयो विरामाश्च सन्ति।

शिवराज-विजयस्य धीरोदात्तो नायकः शिववीरः, गौरसिंह-रघुवीर-सिंहादयः उपनायकाश्च सन्ति। विजयपुराधीशो अवरंगजीवश्च प्रतिनायकौ स्तः। काव्यस्य नायिका सौवर्णी विद्यते। नायकस्य पत्नी नायिका भवति काव्यस्य इति भ्रान्तिश्च विस्मयमुत्पादयति, परन्तु स्त्रीपात्रेषु सर्वोत्कृष्ट-चरित्रा सौवर्णी दृश्यते; अतः सौवर्णी एव काव्यस्य नायिका इति प्रतिभाति।

शिवराजविजये मुख्यो रसो वीरः, शृङ्गारादयोऽङ्गभूताः अन्ये रसा-

श्च सन्ति । प्रायः पाञ्चाली रीतिः, अन्तरा अन्तरा गौड़ी चापि । केऽपि वैदर्भीमपि मन्यन्ते । प्रसादो गुणः, कुत्रचित्तु ओजोऽपि ।

# कवेः अम्बिकादत्तव्यासस्य परिचयः

अम्बिकादत्तव्यासस्य पूर्वजाः आधुनिक-राजस्थान-प्रान्तान्तर्गत-जयपुरस्य समीपवर्तिन्येव भानपुर-नाम्नि ग्रामे निवसन्ति स्म । व्यासस्य पितामहो श्रीहरिरामः समयानन्तरं 'रावतजी-की धूला' इति नाम्नि ग्रामे निज-वसतिं स्वीचकार । हरिरामस्य पुत्रो राजारामो वाराणसीम् आययौ । स राजाराम एव व्यासस्य पिता आसीत् ।

काश्यामेव अम्बिकादत्त-व्यासस्य 1915 विक्रमाब्दे चैत्रमासस्य शुक्लपक्षीयाष्टम्यां जातत्वात् पिताऽस्य नाम अम्बिकादत्त इति चकार इति श्रूयते ।

दशवर्ष-वयस्क एव अम्बिकादत्तः हिन्दीभाषायां समस्यापूर्तिं कवितां च करोति स्म । सरस्वत्याः वरदः पुत्रोऽयमिति नात्र संशयः । क्रमशोऽयं सांख्य-योग-वेदान्तादि-दर्शनशास्त्रेषु चातुरीमुवाह । सप्तदश-वर्षीयो व्यासः राजकीयमहाविद्यालये आंग्लशिक्षां लेभे । स्वायुषः द्वाविंशतितमे वर्षे साहित्याचार्य-परीक्षायां प्रथमोऽतिष्ठत् । अस्य विद्वत्तां कवितां च श्रुत्वा जनाः सन्देहापन्नाः भवन्ति स्म यन्नेयं कवितास्य कृतिः । कथ्यते एकदा स्वामीविशुद्धानन्दोऽस्य परीक्षां कृतवान् । सम्मुखे समुपवेश्य समस्यापूर्तिकरणार्थं अस्मै एका समस्या दत्ता 'मूंद गई आंखें तो आंखें किस काम की' इति । अम्बिकादत्तेन अतिकौशलेन समस्यापूर्तिकृता श्राविता च । कवितां श्रुत्वा प्रसन्नो विशुद्धानन्दः अस्मै 'व्यास' इति पदवीं दत्तवान् । कलिकातः नगरे अम्बिकादत्तः एकदा चतुर्विंशत्यां कलासु शत-पद्यानि निर्माय, रजतपदकेन सह घटिकशतक इति पदवीं प्राप्तवान् । देशाटनं कृत्वा भारतरत्नं, भारतभूषणं, शतावधानं, इत्याद्यनेकानुपाधींल्लेभे । अन्ते पाटलिपुत्रनगरे राजकीय महाविद्यालये प्राध्यापकपद-मलञ्चकार । जीविकां लब्ध्वापि ऋणबाधितत्वात् नायं स्वजीवने कदापि चिन्तारहितो बभूव ।

सदा जीवनेन सह संघर्षणं कुर्वन् 1957 विक्रमाब्दे नवम्बर मासस्य एकोनविंशति-तारिकायां द्विचत्वारिंशद्वर्षवयस्को व्यासः संस्कृत-साहित्यजुषो विदुषो व्यर्थयन् स्वर्गं सनाथितवान्। अस्य-कृतयः सन्त्येता :—शिवराजविजयः, सामवतं, विहारी-विहारः, अवतार-मीमांसा, गद्य काव्य-मीमांसा, साहित्य नलिनी, ललिता-नाटिकादयः संस्कृतस्य ग्रन्थाः व्यासस्य स्मारकाः। हिन्दी साहित्येऽपि व्यासस्य कृतयः प्रसिद्धाः विद्यन्ते।

विलक्षणाऽस्य बुद्धिरासीत्। दशवर्षवयस्कतायां हिन्दी कविता-समस्यापूरणं, पद्य-निर्माणं चास्य बुद्धेरलौकिकतामेव व्यनक्ति। शिवराज विजये काव्ये व्यासस्य सनातनधर्म-निर्भीकतां दृष्ट्वा प्रतीयते यत् सुदृढ़ो हिन्दू सनातन-धर्मानुयायी चासीत्।

# प्रधान पात्राणां परिचयश्चरित्र चित्रणञ्च

## 1. शिववीरः

शिववीरः काव्यस्य धीरोदात्तो नायकः अस्ति। अस्मद्देशस्य जातेर्धर्मस्य च नायकः।

यवनराजस्य हस्ते आत्मानं समर्पयितुमुद्यतान् क्षत्रियान् दूरतः परित्यज्य स्वदेशजात्यभिमानं, देशगौरवं, स्वधर्मप्रेम, प्रजा-वात्सल्यम्, नीति-नैपुण्यम्, अधर्म-द्वेष इत्यादयो शिववीरस्य विशिष्टाः गुणाः सन्ति। काव्ये अस्य चरित्रं दृष्ट्वा एवं प्रतीयते बुद्धः आत्मसंयमे जिह्लेति, रामः प्रजा-रञ्जने विरामं मन्यते, नीतौ चाणक्यः चकितः, देशगौरवे प्रतापोऽपि पृष्ठतः प्रपतितः। ग्रन्थस्याद्यादन्तं यावदस्य चरित्रं समुज्ज्वलं पश्यामः।

बुद्धि :—बुद्धिर्यस्य वलं तस्य निर्बुद्धेस्तु कुतो बलम्, इत्यनुसारेण शिववीरः निजबुद्धि-बलेन नीतिबलेन सर्वत्र सफलो जातः। शिववीरः स्वल्पेन महाराष्ट्र सैनिक बलेन अतुलित-बलस्य भारतसम्राजः अवरंग-जीवस्य जयसिंह यशस्विसिंहादिवीरवरैः कृतसाहाय्यस्य सैन्यविनाशनं, तस्य हृदये च भीतेरुत्पादनं कृत्वा महाराष्ट्रे सुखमय-स्वतन्त्र-राज्यस्य स्थापनञ्च चकार।

विजयपुराधीशस्यादेशानुसारेण अपजलखानः शिवं कपटेन वशयितु-मियेष परन्तु शिववीरः गौरद्वारा रहस्यं प्राप्य तमेव च्छलेन हतवान्। सेनाश्च नाशितवान्। चाणक्य इव शिववीरोऽपि निजनीत्या पण्डितवेषमा-कलय्य पुण्यनगरं प्रविश्य शास्तिखानेन सन्धिमालप्य, यशस्विसिंहः विविधाभिः युक्तिभिः स्वपक्षे कृत्वा वरयात्रायां सम्मिल्य सदुर्गं शास्तिखानं हस्तितवान्। एतत्सर्वं शिववीरस्य बुद्धेः नीतेश्च साफल्यमेव दृश्यते।

**प्रजावात्सल्यम् :—** शिववीरः प्रजानुरागी राजास्ति; अतः मध्ये-मध्ये वेषं परिवर्त्य स्वप्रजां निरैक्षत। बहुधा स्वसैनिकान् भृत्याँश्च, स्वयमन्यै-श्च वा परीक्षते स्म। सेनाः चास्य स्वकर्तव्ये सदा जागरूकाः अतिष्ठन्। गौरसिंहेन दौवारिकस्य कृतां परीक्षां सुदृढमत्र प्रमाणम्। महाराष्ट्रराजस्य आदेशं विनापि सर्वे कर्मकराः सेवकाः समुचितं कार्यं साधयन्ति। रसनार्याः कुमारमायाजिह्मस्य च निग्रहः एतदेव प्रकटयति।

शिववीरः स्वधर्म-तत्परः सदैव कृतोद्योगः तिष्ठति। सर्वत्र महा-राष्ट्रे शिववीरेण ब्रह्मचारि-कुटीराः स्थापिताः। शत्रुनाशाय स्थाने स्थाने अनेन शस्त्राणि अपि स्थापितानि। शिववीरस्य गुप्तचराः कार्य-सम्पादन-दक्षा आसन्। ते गूढाद्गूढतमं रहस्यमुद्भेदयितुं प्राभवन्। वीरवराणां सैनिकानां चोत्साहं पुरस्कार-प्रदानेन शिववीरः द्विगुणयति स्म। एवं प्रबन्ध-स्य विशेषता दृश्यते यत् शिववीरः प्रजानां हृदये शासनं करोति स्म।

**आत्म-संयम :—** शिववीरः आत्मसंयमी राजा वीरश्च आसीत्। दिल्ली नरेशस्य पुत्री रसनारी अस्य हस्तगताऽभवत्। सा शिववीरस्य गुणैः नीतिभिः आकृष्टा जाता। सा एनं न वरयितुमियेष। अयं न च तस्या अनुरोधं स्वीकृतवान् न वा स्ववशे स्थितायाः तस्याः मर्यादामेव बभञ्ज। नर-नारीं प्रति शिववीरस्य व्यवहारः एनं परमं संयमिनं प्रकटयति।

**औदार्यम् :—** राजपुत्रीं रसनारीं, राजकुमारं मायाजिह्मं निगृह्यापि उभाभ्यां सह निजसन्ततिवत् व्यवहरति। शत्रुसन्ततिरियं विचारेणापि मनसापि न क्लेशयितुमवाञ्छत्, प्रत्युत 'सर्वथा सत्कारादिनैव उभौ प्रसादयितुं प्रायतत।

तौ रसनारी-मायाजिह्मौ शिववीरस्योदारतया गृहीतहृदयौ स्व-

पितुरपि पुरतः तस्य भूयोभूयः स्तुतिं चक्रतुः। एतत्सर्वमपि तस्यौदार्यं प्रकटयति।

**निरभिमानिता :**—सर्वत्रापि शिववीरं विनयमूर्तिमिव पश्यामः। मित्रं शत्रुर्वा, गुर्विनेयो वा पदाधिकारी वा यः कोऽपि भवेत् सर्वेण जनेन सह विनीतमेव व्यवहरति शिवराजः, अतः, दुर्लभोऽयं शिववीरसदृशः नम्रः शिष्टः नीतिज्ञश्च संसारे।

**धर्मनिष्ठा :**—शिववीरस्य धर्मनिष्ठा सर्वातिशायिनी विद्यते। भारतीय ज्योतिःशास्त्रस्योपरि सुदृढोऽस्य विश्वासः। कुत्रापि धर्मविरुद्धं नीतिविरुद्धं कार्यं शिववीरः नाकरोत्। अस्य वीरता चन्द्रहासचालनदक्षतां च भारतस्य वीरवराणां वीरगाथामेव प्रस्तौति। एवं शिववीरस्य चरित्रं समुज्ज्वलं चित्रितं विद्यते।

## 2. रघुवीर सिंहस्य चरित्र-चित्रणम्

रघुवीरसिंहः काव्यस्योपनायकः अस्ति। अस्य विविधकार्याणि विविधनामानि च सन्ति। रघुवीरसिंहः कुमार रामसिंहः, राघवाचार्य इत्यादयः कार्यानुसारेण विविध नामधेया सन्ति। अस्य जनुर्नाम रामसिंहः। जन्मनाऽयं जयपुरं समलंचकार। जयसिंहस्य बन्धुः भूस्वामी वीरेन्द्रसिंहः अस्य पिता, माता चास्य बाल्ये दिवंगता। दशवर्षीयेऽस्मिन् केनापि कर्णे जपेन ईर्ष्यया अस्य पितुः वीरेन्द्रसिंहस्य मिथ्यादोषः जयसिंहाय निवेदितः। महाराजा जयसिंह एनं निजाधीनं विधाय सभायां भूस्वामिताहरणविषये घोषणां कृतवान्। अपमानमिदमसहमानोऽस्य पिता सर्वं परित्यज्य एनमादाय पुरोहितेन सह तीर्थयात्रां कर्तुं प्रचलितः। तत्र रामेश्वरदर्शनं विधाय द्वारिकां परिवर्तमानस्यास्य पोतः झञ्झावातेन सागरे भग्नोजातः। येन केनापि प्रकारेण वीरेन्द्र सिंहो मुम्बापुरीं प्राप्तवान्। रामसिंहेनः सहितो पुरोहितश्च सूरतनगरं प्राप्य महाराष्ट्र-देशम् आययौ। तत्र देशे रघुवीर इति नाम्ना प्रख्याप्य शिववीरस्य अनुचरतां स्वीचकार। तत्रैव सौवर्ण्यामासक्तो विहितप्रणयश्च जातः। महाराष्ट्रराजेन अविमृश्यकारितया अपराधं विनापि रघुवीरो निर्वासितः। ततः कलितसंन्यासिवेषः राघवाचार्य इति नाम्ना आत्मानं परिचाययन् शिववीरं ररक्ष।

पश्चात् शिवस्य तोषभाजनतामुपलभ्य मण्डलेश्वरपदमधिरूढ़; सौवर्ण्याः पाणिं गृहीत्वा जीवनसंङ्गिनीं च विधाय सुखेनावर्तत ।

एवं रघुवीरस्यासाधारणं चरित्रं दृश्यते । शिववीरस्यानन्तरमस्यैव स्थानं विद्यते । बहुत्र गुणैः बुद्ध्या, नीत्या शिववीरं चातिशयानोऽयं नायकस्थानं प्राप्नोति । अस्य चरित्रनिर्माणे कवेः विशिष्टो प्रयत्नः विलोक्यते । सर्वप्रथममस्य परिचयः पाठकैः यदा प्राप्यते तदास्य साहसं विलोक्य मनः प्रफुल्लतां प्राप्नोति । प्रथममस्य साहस प्रदर्श्य पश्चात् रघुवीर इति नाम्ना परिचाययति कविः । युद्धे सर्वप्रथमं अस्यैव वीरता दृश्यते । रुद्रमण्डल-दुर्ग-युद्धे रघुवीरः शस्त्रसम्पातमगणयन् दुर्गमारोहति । दुर्गाध्यक्षं रहोत्तमखानञ्चायमेव पराजितवान् । अस्मिन् प्रभुभक्तिः सर्वातिशायिनी विद्यते । मिथ्याशंकितोऽपि प्रभुभक्तिं न परित्यजति । संन्यासिवेषमाकलय्य शिवस्य हितायैव सदा चेष्टमानस्तिष्ठति । शिववीरं मृत्युमुखात् अरक्ष । एतादृशाः देशभक्ताः स्वामिसेवकाः यदि सम्प्रति देशे पुनः भवेयुः तर्हि भारतः स्वर्ग एव भवेत् । सौवर्णी प्रति यदयमासक्तो जातः सा तु मानवानां नैसर्गिकी प्रवृत्तिः । अस्यानुरागेषु मधुकरप्रवृत्तिः नास्ति । युद्धप्राङ्गणेऽपि अस्य हृदयं प्रेयसी प्रेरणया रिक्तं नासीत् । प्रखर संयमी रघुवीरः विवाहात् पूर्वं सौवर्ण्याः मर्यादां न कदापि बभञ्ज । नवा स्वकर्तव्यतश्च्युतो भवति । एवं कृतायां विचारणायां रघुवीरस्य चरित्रे अनेके मणयः दरीदृश्यन्ते ।

रघुवीरस्य वीरता, साहसिकता, प्रभुभक्तिः, सत्यप्रियता सर्वापि स्पृहणीयास्ति ? दूरदर्शितामस्य अवलोकमवलोकं मोमुद्यते मनः ।

## 3. गौरसिंहः श्यामसिंहश्च

ग्रन्थारम्भे गौरबटु-श्यामबटू समायातौ । तावेव इमौ गौरसिंह-श्यामसिंहौ स्तः । उदयपुरराज्य-वास्तव्यस्य खड्गसिंहस्य भूस्वामिनः पुत्रौ इमौ । युद्धे कथावशेषयोः पित्रोः इमौ युगलौ कोसलाभिधया भगिन्या सह देवशर्मणा पुरोहितेऽपाल्येताम् । कदाचित् आखेटार्थं बनं गतौ । मार्गभ्रष्टौ च केनापि लुण्ठकेनापहृतौ निगृहीतौ च अभवताम् । कथंक-

थमपि ततो मुक्तिं लब्ध्वा महाराष्ट्रदेशे कमपि हनुमन्मन्दिरं प्राप्य तस्यैव-मन्दिराध्यक्षस्य साहाय्येन शिववीरस्य समीपं प्राप्तौ कृपाभाजनौ च संवृत्तौ। यद्यपि उभावपि साहसिनौ कर्मकुशलौ आस्ताम् तथापि कविः गौर-सिंहस्यैव चरित्र-चित्रणे कृतप्रयत्नो दृश्यते । श्यामसिंहस्य चरित्र-निर्माणं कवेः अभीष्टं नासीत् ।

**कार्यकौशलं वीरत्वञ्च**—गौरसिंहः न केवलं गूढ़चरताकार्यं करोति अपितु वेषपरिवर्तनं कृत्वा शत्रूणां वञ्चनं छलनं च साधु जानाति। अयं युद्धविद्यायां दक्षः, चन्द्रहास संचालने निपुणः ; अतएव सर्वत्रैव युद्धेषु समालोक्यते । शिववीरस्य सर्वे गुप्तचराः युद्धविद्यानिष्णाताः एवासन् । तेषु गौरस्य स्थानं श्रेष्ठं विद्यते ।

अस्य स्वामिभक्तिः बुद्धिश्चातितीक्ष्णा। प्रभोः आदेशं विनापि दूरदर्शिन्या बुद्ध्या समुपस्थितं कार्यं साधुतया सम्पादयति । कुमारमाया-जिह्वस्य, रसनायांश्च अपहरणमस्य दूरदर्शिन्याः बुद्धेः प्रमाणम् । अपजलखानादि शिविरेषु अस्य दूरदर्शिता विचित्रास्ति । सर्वेष्वपि विषयेषु सुविस्तीर्णमिवास्य ज्ञानं दृश्यते । संगीत-भूगोल-विविध-देश-भाषा-विज्ञानञ्चैतत्सर्वमपि हस्तामलकवत् विद्यतेऽस्य ।

**कूटनीति निष्णातः**—गौरः कूटनीति-निष्णातो विद्यते। गूढ़चरता-कार्यं सम्यग् जानाति गौरसिंहः । यथा—संन्यासि-वेषमाकलय्य प्रथमं प्रतापदुर्ग-दौवारिकं परीक्षते। तानरंग-वेषेण अपजलखान-शिविरं प्रविश्य यवनसैनिकानां मुखात् पर्याप्तं रहस्यं ज्ञात्वा वाक्चातुर्येण अपजलखानस्यापि व्यवसितं कार्यं जानाति ।

दिल्लीं गतोऽपि गौरसिंहः प्रहरिणां नेत्रेषु रेणुकाराशिं प्रक्षिप्य बहिरन्तश्च यातायातं कुर्वन् अयमेव कृतमाल्यश्रीकसहायः मिष्ठान्न-पेटिकायां शिवं बहिरानयत् ।

रसनायाः अपहरणे वृद्धवेषमाकलय्य यवनभटानां सम्मोहनं कस्य हृदये न विस्मयम् उत्पादयति। पद्मिनी वेषेन कुमार मायाजिह्वापहरणमस्य लोकोत्तरं अभिनयपाटवं प्रदर्शयति। एवं वेषं परिवर्त्य स्वकार्यसाधने परमकुशलो गौरसिंह इति निश्चप्रचम् ।

## 4. भूषण कविः

हिन्दी कविता रसिकस्य जनस्य कविकुलभूषणो भूषणो नाम कविः न कर्णशष्कुलीमस्पृशत। अयं कविः वीररसस्यावतार इव वीररस-कवितां कवयति स्म। पूर्वमयं अवरंगजीवस्य सभायामासीत्। परन्तु अभिमानिनमखर्व-गर्वयुक्तं, अवरंगजीवं परित्यज्य शिववीर-सभाया-मागच्छत्। समये-समये वीररस पूर्णां कवितां श्रावयन महाराष्ट्रसैनिकानां चेतः समुत्साहेन समुल्लासयतिस्म। अस्य कवितासु वीररसः एव भवति स्म यत् कवितां श्रुत्वा साधारणोऽपि जनः संग्रामभूमौ अवतरति स्म। जातीयता राष्ट्रीयता चास्य कवितायाः विशिष्टौ गुणौ आस्ताम्। अम्बिकादत्तव्यासेन निजगद्यकाव्ये भूषण-सदृशस्य कवेः चरित्रं कर्तव्यञ्च प्रदर्श्य साहित्य-काराणां कर्तव्यं निर्दिष्टम्। नहि कवेः चाटुकारिता शोभते। राष्ट्रं सुदृढं सुसंघटितञ्च कर्तुं राष्ट्रीयभावनायाः कवितायां परमावश्यक-तास्ति। देशरक्षकसैनिकानां राज्ञाञ्च हृदये वीरतोज्जागरणं वीररस-भरणं च कवेः कर्तव्यमेव अस्ति। या कविता देशस्य प्राणाः जातेर्जीवनम् सैव कविता भूषणकवेः वाचि समाश्रितासीत् यां, श्रुत्वा महाराष्ट्र-सैनिकाः देशस्य कृते मरणाय कल्पन्ते स्म।

## 5. अवरंगजीवः (औरंगजेब)

अयं अकबरशाहनाम्नो यवनस्य प्रपौत्रो ऽवरंगजीवः शिवराज विजयगद्यकाव्यस्य प्रतिनायकः अस्ति। अवरंगजीवो भारतसम्राट् शिववीरस्य भारतभुवश्च प्रधानः शत्रुरासीत्।

**नीतिः**—अयं परमधूर्तो दूरदर्शी चासीत्। अखिले भारते अकण्टकं राज्यं स्थापयितुं सर्वाधिकं प्रयत्नमयं कृतवान्। शिववीर प्रधानकण्टकं विज्ञाय स्वयमपनेतुमसमर्थः सन् मेदःपाट (मारवाड़) प्रदेशस्य भूपतिं यशस्विसिंहं जयसिंहञ्च अस्मिन् कर्मणि न्ययोजयत्। एतयोः नियोगे अस्य अभिप्रायः आसीत् एनयोः विनाशो भविष्यति शिवस्य वा उभयथापि हिन्दू बलस्य हानिरेव स्यात्।

शिववीरः तस्याभिप्रायं ज्ञात्वा यशस्विसिंहं, निजवाग्मिताभिः स्वपक्षे आनयितुमशक्नोत् परं जयसिंहो ऽन्धप्रतिज्ञायामेव स्वदेशस्य हानिं

कुर्वन् शिववीरं करप्रदत्तायां मैत्र्याश्च करणार्थं विवशं कृतवान् । परन्तु शिववीरस्य चातुर्य्येण अवरंगजीवस्य सर्वापि नीति निष्फला जाता ।

अस्य नीतिः शिववीरव्यवसित-कार्यस्य गन्धमपि गृहीतुं नापारयत् । दिल्ली-नगरे निगृहीतः शिववीरः स्वसेनां परावर्तयितुं किमर्थमैच्छत् इति स्वप्नेऽपि नाचिन्तयत् अवरंगजीवः ।

**हृदयस्य क्षुद्रता**—क्षुद्रता त्विमं सांगोपांगं समालिङ्गत् । शिववीरस्य स्वनिगृहीताभ्यां रसनारी-कुमारमायाजिह्माभ्यां औदार्येण व्यवहरणे सकुशलं तयोः प्रतिदाने च भीतिमेव हेतुमाकल्पयत् नतु तस्यौदार्यम् । अत एव स्वहृदयस्य क्षुद्रतया कृतसन्धिमपि निमन्त्रितमपि शिववीरम् अपमानितवान् ।

**प्रबन्धनैपुण्यम्**—प्रबन्धोऽस्य सर्वथा शिथिलोऽवलोक्यते । प्रजानां हृदये नास्य शासनम् । अस्यानुचराः स्वामिभक्ति न जानन्ति । ते तु धनस्यैव उपासकाः, अत एव पुण्यनगरे दिल्लीनगरे च यवनराज्ये सर्वत्रैव महाराष्ट्रचराः सञ्चरन्ति । यवनप्रहरिणः यत्र तत्र सुप्ताः समवलोक्यन्ते । शिववीरः भ्राम्यन् खड्गं वस्त्रं च गृह्णाति । किमधिकं शिववीरस्य दिल्लीनिग्रहतः मुक्तिः अस्य प्रबन्धशैथिल्यस्य स्पष्टमुदाहरणं प्रमाणञ्च विद्यते ।

## 6. जयसिंहस्य चरित्र-चित्रणम्

जयपुराधीशो जयसिंहः क्षत्रियवीरवरः संग्रामधुरन्धरश्चासीत् । तथापि अवरंगजीवस्याधीनतां स्वीकृत्य तस्याज्ञां वहति । यवनराज्यस्य विस्तारे च स्वबलं प्रायुङ्क्त । अयं राजपुत्रदेशीयः दृढ़प्रतिज्ञः क्षत्रियः यत् किमपि मुखेन वदति तत् प्राणव्ययेनापि साधयति, वैदुष्यमस्य तु लोकोत्तर-मासीत् । यतोहि शिववीरस्य वाग्मिता सर्वत्र अमोघा दृश्यते, यया वाग्मितया यशस्विसिंहं गोपीनाथ पण्डितं, शास्तिखानं च स्ववशं कृतवान् । सा शिववीरस्य वाग्मिता जयसिंहस्य सम्मुखे विफला जातेति जयसिंहस्य वैदुष्यं प्रकटयति ।

वस्तुतः जयसिंहस्य हठ एवात्र निदानम्, नतु वैदुष्यम्। शिववीरस्यैक एव प्रश्नः "किं देशसेवातोऽधिकः कश्चिद्धर्मोऽस्ति ?" किं म्लेच्छानां साहाय्यमापाद्य प्रजापीड़नं, मन्दिरध्वंसनं, अबलासु बलात्कारांश्च दिने दिने वर्धयित्वा भारतभुव; पारतन्त्र्यशृंखला-बन्धन-दृढ़ीकरणमेव धर्मः ? अस्य प्रश्नस्योत्तरं जयसिंहेन युक्तियुक्तं न दत्तम् केवलम् "अत्र च्छलं न चिकीर्षामि, म्लेच्छानां साहाय्यं विधातुं कृतां प्रतिज्ञां न जिहासामि, इत्थं महाधर्मो मां स्मर्क्ष्यति, इत्यादीनि, वचनानि, कस्यापि विचारकस्य अन्तःकरणं न स्पृशन्ति ; अतोऽयं धर्मं न जानाति केवलं हठधर्मं जानाति। छलकरणं प्रतिज्ञापरिहरणञ्च असंशयं पापमेव। परं पापमपि कुत्रचित्स्थलेपुण्यं जायते।" यथा सकृन्मिथ्या भाषणं गोब्राह्मणयोः, देशस्य, धर्मस्य, जातेश्च यदि रक्षा भवेत्तर्हि मिथ्याभाषणमपि पुण्यमेव। निस्वार्थभावेन कृतं कर्म सदा पुण्याय भवतीति नात्र संशयः।

एवं जयसिंहस्य हठधर्मिता, भारतवर्षस्य विनाशहेतुरस्ति। अहिंसा परमोधर्मः, इति तु सत्यमेव परन्तु अहं कमपि एतादृशं इतिहासं न पश्यामि यत्केवलं अहिंसा बलेन राज्यं रक्षितं भवेत्। शमप्रधानेषु अहिंसा-सत्यप्रियेषु धर्मशास्त्रेष्वपि दण्ड एव प्रजास्थितिहेतुः प्रतिपादितः। किं दण्डे हिंसा न भवेत्। एवं हि दृश्यते अस्माकं प्रधानमंत्री पं. जवाहर लाल नेहरू महोदयः स्वजीवनकाले किंचित् समयं यावत्; पंचशीलसिद्धान्तं स्वीकृत्य सैन्यशक्तिं प्रति ध्यानं नाददत। यदा चीनः भारतमाक्रमत्, तदा तेन ज्ञातं यद्राष्ट्ररक्षायै सैन्यशक्तिः अवश्यमेव भवितव्या इति। तदनन्तरं पाकिस्तानेन सह द्विवारं युद्धमभवत्। भारतीयाः सदैव विजयिनः अभवन्; अतः राष्ट्ररक्षायै छलं, कपटं, मिथ्याभाषणं, हननमपि च धर्म एवास्ति। सारांशोऽयं यत् जयसिंहेन यदनुष्ठितं तत् सर्वमेवानुचितमेव।

## 7. यशस्विसिंहस्य चरित्र-चित्रणम्

अयं मरुधराधीशो यशस्विसिंहो नाम राजा यवनानामधीनतां स्वीकृत्यापि तान् अन्तर्द्वेष्टि स्म। तत्रापि शिववीरेण बहुशो बोधित; यवनबलं ह्रासितवान। यदा शिववीरः शास्तिखानमाक्रमत् तदानेन तस्य

साहाय्यमपादि। भवेन्नाम केषांचन जयसिंहप्रभृतीनां विचारे निन्दास्पदम-यमन्तर्द्वेषः। भ्रम एव तेषाम्। सत्यं अन्तर्द्वेषो न साधुः। परं वैयक्तिकं एवायं निन्द्यः इति सर्वशास्त्रसम्मतम् इति स्पृशति मे मतिः नरहत्यास-दृशं महापातकमपि वैयक्तिकं स्वार्थं परिहाय, देशस्य जातेश्च कृते क्रियमाणं न दोषावहम्। महाराष्ट्रराजो शिववीरो यवनैः सह सम्मुखे युद्धं कर्तुमशक्तः लुण्ठनादिना कपटेन एतादृशैरेव चान्यैरुपायैः तेषां विनाशाय प्रयतमानोऽपि कस्य नादरणीयः स्यात्? महाभारतेऽनुशासन-पर्वणि सुष्ठूक्तम्—

यस्मिन् यथा वर्त्तते यो मनुष्यः,
तस्मिन् तथा वर्तितव्यं स धर्मः।
मायाऽऽचारो मायया वर्तितव्यः,
साध्वाचारः साधुनैवाभ्युपेयः ॥

अन्तर्द्वेषः निन्दितः स्यादपि तर्हि किं म्लेच्छानां साहाय्यं विधाय स्वदेशभ्रातॄणां कन्धरच्छेदः भारतबन्धनं सुदृढीकरणं, स्वजातेः धर्मस्य च विनाशनं, नाधर्मः? नैतत्सदृशं किमप्यन्यपातकं प्रतिपादितं धर्मग्रन्थेषु पश्यामः; अतो जयसिंह-प्रमुखानां म्लेच्छसहायतां कृत्वा धर्मध्वसं विदधतामन्तर्द्वेषादि विनिन्दनं विडम्बनामात्रमेव, केषुचित् इतिहास-ग्रन्थेषु लिखितमस्ति-यत् यशस्विसिंहः धनलोलुपतयैव शिववीरस्य सहायतां चकार। यदीदं सत्यं तर्हि सत्यमेव निन्दनीयं परन्तु शिवराजविजये अस्मिन् काव्ये नैतद् वर्णितं विद्यते। तत्र तु एवं वर्णितं दृश्यते यत् शिव-वीरस्य देशानुराग-सागरे यशस्विसिंहः निमग्नो जातः, अतः शिवराज-विजयेऽस्य चरित्रं समुज्ज्वलं देशभक्तिपूर्णं च दृश्यते। अस्य हृदये एवं देशानुरागः दृश्यते—यत् ऐक्याभावे मुण्डे मुण्डे मतिर्भिन्ना इत्यादि कारणेन भारतं छिन्नं-भिन्नं विलोक्य नितान्तं खिन्नोऽस्ति यशस्विसिंहः। अतोऽयं वीरः भारतस्य स्वतन्त्रतां हृदयेन वाञ्छति। राष्ट्रोद्धाराय एव शिववीरस्य पक्षमवलम्बते।

## 8. सौवर्ण्याः चरित्रचित्रणम्

इयं सौवर्णी खड्गसिंहस्य पुत्री, गौरश्यामयोः भगिनी, काव्यस्य नायिका, स्त्रीपात्रेषु अस्याः चरित्रं सर्वं श्रेष्ठमादर्शमयञ्च विद्यते। इयमद्वितीया सुन्दरी, विविधकष्टानि जन्मन आरभ्य विवाहान्तं सोढवती। मधुरया गिरा, प्रकृष्टेन धैर्येण, मृगी सहवासिना मौग्ध्येन कस्य मनो न हरति। अस्याः चरित्रचित्रणे व्यासस्य लेखिनी सर्वदा तत्परा तिष्ठति। वीररस पूर्णेऽस्मिन् काव्ये साक्षाच्छृंगार मूर्तिः सौवर्णी प्रतिभाति। एषा भारतीयललनाया, आदर्शस्वरूपं प्रस्तौति। रघुवीरेऽनुरक्ता सौवर्णी। निजहृदयेन वृतं पतिं रघुवीरं सदादरेण पश्यति। अनयोः सौवर्णी रघुवीरयोः प्रेमसम्बन्धः केषांचित् विदुषां मते आधुनिक प्रेमविवाहस्य स्वरूपः। परमयं न प्रेमविवाहः। आधुनिक-प्रेम-विवाहे विवाहात्पूर्व-मपि संयोगः भवति। परमत्र यावत् श्रेष्ठाभिभावकानां निर्देशो न भवति तावत् हृदये कामनापि कदापि न भवति संयोगस्य। अनयोः प्रेमसम्बन्ध, केवलमाकर्षणमिव प्रतीयते परन्तु अन्योऽन्यं स्वीकृतं सुदृढ़ं भवति प्रेमबन्धनम्।

अनयोः आसक्तिः मधुकर वृत्ति नाश्रयते। मधुकरवृत्तिरासक्तिः इन्द्रियजन्या वासना भवति; अतः दुःखस्य पतनस्य च हेतुः।

सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरण-प्रवृत्तयः इति कवि-कुल गुरोः कालिदासस्योक्तिमनुसृत्य सौवर्णी रघुवीरं पतिं स्वीकृतवती। सौवर्णी-रघुवीरयोः प्रशंस्योऽनुरागः।

इयमादर्श-महिलानां मूर्तिः। स्त्रीजातेर्भूषणं लज्जापि अस्यां समुपलभ्यते। अस्याः रघुवीरे अनुरागः शकुन्तलायाः दुष्यन्त इव सरलः, वाचालता विरहितश्च समवलोक्यते। परमियमपि न जानीते लौकिकी वासना परमन्तः कथमिव प्रेयसम्प्रति प्रद्रवति, इति नो जानीते। प्रियम्वदानुसूयाभ्यामिव विलासिनी-चारुहासिनीभ्यां साग्रहं पृच्छ्यमाना कथं कथमपि स्खलन्त्या गिरा स्वानुरागं निवेदयति।

अस्या अनुरागो रघुवीरं विना नान्यं कमपि स्वानुरूपं मन्यते।

क्रूरसिंहोऽनुरज्यतेऽस्याम् । एनां मनसापि अभिलषति । परमेषा तु मनसापि न चिन्तयति । अपितु सर्वथा घृणास्पदमेव मन्यते । अलाभे रघुवीरस्य सौवर्णी मरणं श्रेष्ठं मन्यते न क्रूरसिंहम् ।

पार्वती इव सौवर्णी सुखसाधनानि परित्यज्य हविष्याहारा स्थण्डिलशायिनी च भूत्वा तं ध्यायन्ती तस्य कुशलं कामयन्ती तपोऽवतिष्ठत् ।

नास्याः इन्द्रियवासना-जन्यम् प्रेम, इति । अनुरागस्यानन्यतया कठिनव्रतनिर्वहणेनैव न यद्यपि सिध्यति तथापि अस्याः कर्त्तव्य-दृढ़ता विशेषेणैतत्साधयति । रघुवीर, प्रभुद्रोहापराधेन मिथ्यैव कलंक्यते । इयं स्वकलङ्कमपरिहृत्य समायातं दयितं नहि दिदृक्षते । स दृढ़ां प्रभुभक्तिं प्रदर्श्य स्वकलङ्कपङ्कमपहाय सर्वेषां पुरतः आत्मानं प्रकाशयितुमभिलषति, इति राघवाचार्यमुखात् तस्य व्यवसितं श्रुत्वा नितरां प्रसीदति । सहसा च प्राणनाथ ! वरं प्राणत्यागो न कलंकमलीमसं जीवनं इति समुद्गिरति । एवं सौवर्णी आदर्श-महिलास्ति । अस्यां मौग्ध्यं, अनन्योऽनुरागः, तपश्चर्या, कर्त्तव्य-निष्ठा, इत्यादयः गुणा समुपलभ्यन्ते ।

## 9. रसनार्याः चरित्रचित्रणम्

इयम् अवरंगजीवस्य पुत्री रसनारी नाम कस्मैचित् प्रयोजनाय गोलखण्ड-पर्यन्त समायातं दिल्लीश्वरं साक्षात् कर्तुं शिविकया गच्छन्ती गौरसिंहेन सैनिक-साहाय्येन अपहृताऽभवत् । जयसिंहद्वारा शिववीरस्य दिल्लीशेन सह सन्धिसमये परावर्तितासीत् ।

तोरण-दुर्गे निवसन्तीयं प्रथमसाक्षात्कार एव शिववीरस्य गुणैराकृष्टा तस्मिननुरक्ता जाता । यद्यपि कविनाऽत्र साधारणरूपेण शिववीरस्यापि तस्यामनुरागाभासः प्रदर्शितः तथापि सनातनधर्मरक्षणैक-व्रतस्य तस्य तस्यामनुरक्तेर्लेशोऽपि न संभाव्यते । एकतश्च प्रवृत्तमिदं प्रेम शुद्धं न प्रतीमः; शुद्धमान्तरिकं प्रेम सौवर्णी-रघुवीरयोरिव सर्वदा उभयतः प्रवर्तते । शुद्धं प्रेम प्रेयांसमवश्यं समाकर्षति परं नात्र तत्पश्यामः ।

शुद्धोऽनुरागो दयितमलभमानोऽन्ते प्राणान् विरहाग्नौ जुहोति परं

नास्या अनुरागे तादृशमपि प्रयत्नं समुपलभामहे। पितृगृहगतेयं दिल्लीगतं शिववीरं साक्षात्कर्तुं शतशः प्रायतत परं शिववीरेण दिल्लीं प्रेष्यमाणा मत्पिता दिल्लीश्वरो मामेनं वरयितुं नानुज्ञास्यति इति जानन्त्यपि तदनुरागमविगम्य पितृस्नेहेन समाकृष्टा तत्र गन्तुं न न्यषेधीत् । किं शुद्धो दृढ़श्चानुरागो दयितं बिना कमपि अन्यमवेक्षते ?

वाक्पाटवमस्या असाधारणम् । इयं कवयित्री आसीत्, अतएव शिववीरस्य पुरतः स्वानुरागं विशकलय्य न्यवेदयत् इति केषांचन मतम् । परं न वयं कवयित्रीष्वपि स्त्रीषु सहसा ह्रियं परित्यज्य स्वदयितस्य पुरतो वाचालता प्रदर्शनं पश्यामः । न चापीदं शोभते । परमियं जात्या यवनी इति हेतोः समीचीनं प्रतीयते ।

———

# निश्वास-क्रमेण कथासंक्षेपः

## 1. शिवराज-विजयस्य प्रथम निश्वासस्य कथासारः :

प्रथमनिश्वासे ग्रन्थकृतमंगलानन्तरं, वयमरुणोदय-समये महा-राष्ट्रदेशस्यैकस्मिन् भागे कदलीदल कुञ्जायितायां विविध-सुमन-परिल-सितायामेकस्यां वाटिकायां बिहरामः । मध्येऽस्याः विराजते कुटीर एकः । यस्य पूर्वतः रमणीयमेकं सरः, दक्षिणतश्च निर्झरध्वनि-ध्वनितः एको पर्वतखण्डः विलसति । सहसैव कुटी वासिनामन्यतमो गौर बटुनामा छात्रः कदलीदल-पुटकं विधाय पुष्पावचयं कर्तुमारेभे । तत्सतीर्थ्यः श्यामबटुः तत्र समागत्य तं प्रतिषेधयति कथयति च यत् मया पूर्वमवावचितानि कुसुमानि, त्वं तु रात्रौ चिरं जागृतवान्; अतः क्षिप्रं नोत्थापितः । गुरु-चरणाः तडागतटे सन्ध्यामुपासते । सकला सामग्री मया तस्य समीपे प्रस्तुता कृता । गौरबटुः यावत्किमपि वक्तुमियेष तावद् उभयोर्दृष्टिः पर्वतशिखरात् अवतरति योगिराजे अपतत । ततः तत्सम्मानार्थं ससुचितसामग्री-सम्पादन-व्यग्रौ द्वावपि भवतः । छात्रैः सह ब्रह्मचारि गुरुः तस्य सत्कारं विधाय, आसने चोपवेश्य, स्वयमपि समुपविशति । तावत्-कस्या अपि कन्यकायाः कुटीरात् रोदन-शब्दः समश्रूयत । ततस्तस्य वृत्तं जिज्ञासमाने योगिराजे ब्रह्मचारि-गुरुः कथयितुं प्रारभत ।

भगवन् ! श्रूयतां यदि कुतूहलम् ? ह्यः सायमस्माभिः इयं रुदती वनं प्रान्तात्सम्प्राप्ता । एनां पृष्ट्वा अस्याः परिचयमध्यागच्छामः यत् अत्र नेदीयस्येव ग्रामे वसतः कस्यचिद् ब्राह्मणस्येयं पुत्री । नदी तीरं स्नातु-मागातायाः मातुः हस्तादेनामाच्छिद्य यवनः एको वनमिदं प्रविष्टः । तत्र भल्लूक साक्षात्कारेण भीता वृक्षमेकमारूढ़ः । अस्या क्रन्दनं श्रुत्वा अस्मत्

छात्रैः आनीता । तच्छ्रुत्वा योगिराजोऽवदत् कथं विक्रमराज्येऽपि एतादृशाः अत्याचाराः भवन्ति । ब्रह्मचारि गुरुः समुदतरत् भगवन वीरविक्रमस्य भुवं परित्यज्य गतस्य वर्षाणां सप्तदश शतकानि व्यतीतानि । योगिराजः चकित इवोवाच सत्यं न लक्षितो मया समयवेगः। सम्प्रति का दशा भारत-वर्षस्य इति शुश्रूषते मे हृदयम् । ततो ब्रह्मचारि गुरुः इत्थं संक्षेपेण भारत-वर्षदशामश्रावयत् । भारतभुवः दुर्भाग्येण दिवंगते विक्रमादित्ये परस्परं द्वेषाग्निज्वालावलीढेषु राजसु, प्रशंसामात्रप्रियेषु शासकेषु, इन्द्रस्त्वं, वरुणस्त्वं इति वर्णनासक्तेषु, कविषु, कामिनी-कटाक्षार्पिताखिलशौर्य-विभवेषु, शूरेषु, कश्चित् गजनी देशवास्तव्यो महामदो यवनः द्वादशवारं भारतं समाक्रम्य लुलुण्ठ । एवं 1087 विक्रमाब्दे तस्मिन् दिवंगते कश्चित् गौरदेशवासी यवनः दिल्लीश्वरयाम्बभूव । स पृथ्वीराज जयचन्द्रं च वियोज्य, उभावपि विनाश्य, यवनराज्यमत्रास्थापयत् । तस्यैव क्रीतदासः कुतुबशाह नामा भारतस्य प्रथमः सम्राट् बभूव । ततः प्रभृति एषामेव दान-वानां राज्यं प्रावर्तत । एतेषु केवलम् अकवरशाह नामा, यद्यपि गूढशत्रुः भारतस्य तथापि शान्तिप्रियो विद्वत्प्रियश्च बभूव । अधुना तस्यैव प्रपौत्रः अवरंगजीवः भारतं शास्ति । सर्वत्रैव तस्यैवाधिकारः । केवलं दक्षिणदेशे नाद्युनापि तस्याधिकारो जातः ।

ततो योगिराजो ब्रह्मचारिगुरोः कामपि जिज्ञासां ज्ञात्वा-आम् यवनानां पराजयो भविष्यति, विपद्-ग्रस्तोऽपि शिववीरः मित्रसाहाय्येन विजयी-भविष्यति । अपरां जिज्ञासामुद्दिश्य योगिराडुवाच, आम्-जीवति, विवाह-समये द्रक्ष्यति तं भवान् इत्युक्त्वा योगी तपस्तप्तुं जगाम ।

अथ शनैः शनैः निर्मक्षिके संवृत्ते यावत् ब्रह्मचारि गुरुः गौरसिंहेन सह किमपि समालपति तावत् कस्यापि पादाहति-ध्वनिः अश्रूयत । आलापं विरमय्य चिरान्वेषणेनापि कमपि न प्राप्य पुनः समारब्धे आलापे, पुनः मर्मरशब्दः कर्ण-विषयः समजायत । ततः सखड्गो गौरसिंहः, कारणमन्वि-ष्यन् कदली-तरूणां मध्ये यवन-युवकमेकं दृष्टवान । ततस्तयोः सवृत्ते चिरं परुष-सम्भाषणे परस्परं योद्धुमुद्यतयोश्च तयोः अकस्मात् गौरसिंहः यवन-

युवकस्य शिरः विच्छेद । तस्य वस्त्रात्प्राप्तं पत्रमादाय सर्वे स्वकुटीरं विविशुः ।

## 2. द्वितीयनिश्वासस्य कथासारः

विजयपुराधीशेन प्रेषितोऽपजलखान; शिववीरेण युयुत्सुः भीमायास्तटे पटभवनानि सन्निवेश्य अतिष्ठत् । इतो धृत-सन्यासि-वेषः गौरसिंहः एकेन सहचरेण सह निशीथे प्रतापदुर्गस्य दौवारिकं वहुशः परीक्ष्य तं कर्तव्यनिष्ठं च प्राप्य, सन्तुष्टः अन्तः प्रविवेश ।

एकस्यां विशालाट्टालिकायां सन्ध्यामुपास्य अन्तरंग मित्र-मण्डले समासीनं शिववीरं ददर्श । कुशल प्रश्नाद्यनन्तरं कन्यापहारक-यवन युवकस्य वसनेभ्योऽन्विष्य प्राप्त पत्र निष्कास्य समदर्शयत । तत्प्राप्ति-कथानकं च अश्रावयत् । पत्रं पठित्वा गौरः न्यवेदयत्—महाराज ! विजय-पुराधीशः अपजलखानं सम्बोध्य लिखति हे वीर ! त्वं शिवेन सह योद्धु प्रेषितोऽसि परं सिंह-हननापेक्षया जीवतो निग्रहः प्रशस्यः । यदि जीवन्तमेव त वीरं यत्नेन निगृह्णीयाः, तदाहं, त्वां वीरपुङ्गवोपाधिना योजयिष्यामि । गोपीनाथपण्डितः त्वत्सकाशं प्रेष्यते । सः कार्यविशेषार्थं शिवमपि द्रक्ष्यति' सर्वेऽपि वृत्तमिदं श्रृण्वन्तः कोऽय गोपीनाथः कुतोऽय इति जिज्ञासामकुर्वन् । तदैव प्रतीहारः गोपीनाथागमन समसूचयत् । तस्य समुचितं प्रबन्धार्थं माल्यश्रीको विनियुक्तः ।

इतो गौरसिंहः शिवस्यादेशं प्राप्य सहचरेण सह यवनशिविर-सन्निवेशं प्राप्तवान् । अत्यन्त गूढ़ानि रहस्यानि जानन् दौवारिकेनानुमत-प्रवेशः अपजलखानाधिष्ठितं प्रधानं पटभवनं प्रविष्टः । तानरगनाम्ना निजं परिचाय्य, विविधराग मिश्रया एकया गीतिकया तं प्रसाद्य लब्धपारितोषिकः प्रसंगतः शिववीरं प्रशंसन् स उवाच, श्रीमन् ! यद्यपि शिवः परमो वीरः परमद्य शशकः सिंहेन भवता योद्धु गच्छन् अवश्यं निधनं यास्यति चेत्साक्षाच्छिव एव साहाय्यं न विदध्यात् ।

अपजलखान उवाच—को नाम खपुष्पायितः शिवोऽस्ति यः एनं रक्षिष्यति । दृश्यतां श्व एव अस्माभिरेषो पाशैर्बध्वा चपेटैः ताड्यमानो

विजयपुरं नीष्यते, इत्युक्त्वा मदावेशमूढ़: आदिशत् भो ! भो !! योद्धार: ! सूर्योदयात्प्रागेव भवन्त: पञ्चापि सहस्राणि सादिनां, दशानि सहस्राणि पत्तीनां सज्जीकृत्य तिष्ठत इति गोपीनाथ पण्डित द्वारा मया शिववराक: आहूतोऽस्ति । तद्यदि विश्वस्य समागच्छेत् ततस्तं वद्ध्‌वा जीवन्तं नेष्याम:, अन्यथा सदुर्गमेनं धूलीकरिष्याम: ।

तत: सूदेन कृते भोजन-प्रस्तावे सभा विसृष्टाऽभवत्, गौरोऽपि ससहचर: प्रतिनिवृत्त: ।

इतस्तु प्रतापदुर्गे विहिताहारादि-व्यापारे तन्द्रापरवश इव गोपीनाथे शिववीरस्तमुपातिष्ठत । शिव: तं स्वसाहाय्यार्थं इत्थमूचे । केवलं श्व: अस्मिन्नुद्याननिकटे पटकुटीरे यवनसेनापति: अपजलखान आनेय: येनाहं मिलित्वा किमपि आलपामि । तत्सम्भवति, इति प्रतिपद्य गोपीनाथ: तस्मिन्नेव निशीथे दुर्गादवातरत् । तदनन्तरं तानरंगवेषो गौरसिंह: शिवेन समालप्य तदाज्ञप्त: स्व वासस्थानं ययौ । शिव: स्व-सेनापतीन् यथोचितं समादिश्य होरात्रयं सुष्वाप । अपरेद्यु: महाराष्ट्रसेना यथा संकेतमतिष्ठत् । महाराष्ट्रराजो शिववीर: अश्वनियामक-वेषेण गौरसिंहे-नानुगम्यमान: माल्यश्रीक-प्रभृतिभि: वीरवरै: निपुणं सतर्कञ्च निरीक्ष्य-माण; समागमस्थानस्य समीपे अश्वमरुणत् । इतोऽपजलखान: शिविकातो, शिवश्च घोटकात् समकालमेव अवातरताम् ? सादरवचनैश्च त्वरमाणौ अन्योऽन्यमालिलिङ्गतु: । शिवस्तु आलिङ्गनश्छलेनैव तस्य स्कन्धौ दृढ़ाभ्यां हस्ताभ्यां गृहीत्वा तस्योर: व्यदारयत् भुवि च तमपातयत । अत्रान्तरे शिवस्य सैनिका: शिविराणि अदहन् । हरहर महादेव इति आम्रेडयन्त: यवन सैनिकेषु समापतन । महानासीत् कोलाहल: । निहतेषु बहुषु यवन-वीरेषु गौर-सिंह: प्रलम्बवंशाग्रे अपजलखानशवं समारोप्य उपरि कृत्वा सर्वान् दर्शयन् सभेरीनादमघोषयत् । दृश्यतां सेनापति: पलायध्वम् किमिति मुधैव प्राणांस्त्यजथ इति । क्रीडापुत्तलायितं सेनापते: शरीरं दृष्ट्वा हतोत्साहा: सर्वे पलायिता: । शिववीरो रणांगणशोधनाधिकारं माल्य-श्रीकाय समर्प्य विजयशंखनादै: रोदसी सम्पूर्य प्रतापदुर्गं प्रविष्ट: मातुश्चरणौ च प्रणनाम । इति ।

## 3. तृतीयनिश्वासस्य कथासारः

अथ तत्र पर्णकुटीरे दाडिमास्वादन तत्परां कुसुमगुच्छैः मनोविनोदयन्तीं कन्यकां गुरोः समीपे परित्यज्य श्यामबटुः तत्पितरौ मार्गयितुम् आसन्नग्रामाटिकां प्रति प्रचलितः। यवनानां विविधानत्याचारान् स्मारं स्मारं परमं खिद्यमाने ब्रह्मचारि गुरौ देवशर्मणा ब्राह्मणेन सह प्रविष्टः श्यामसिंहः। तं वृद्धं दृष्ट्वा कन्यका कुसुम-स्तवकं परित्यज्य तस्य गले समालग्ना उच्चैः रुरोद। स ब्राह्मणोऽपि तस्याः पृष्ठे हस्तमेकं विन्यस्य द्वितीयेन करेण शिरः परामृशन् तस्याः दुःखमयमितिहासं कथयन् रोदितुमारब्धः।

रोदनशब्दैराकृष्ट इव गौरसिंहोऽपि कुटीरे प्रविष्टः। वृद्धस्य वचनं श्रुत्वा श्यामबटुं सम्बोध्य उवाच शृणोषि श्याम, इति। ततः श्यामोऽपि शृणोमि भ्रातः। सेयमावयोः भगिनी सौवर्णी, अयञ्च पूज्यः पुरोहितो देवशर्मा। वचनमिदं श्रुत्वा वृद्धः तौ द्वौ विलोक्य आः किं खड्गसिंहस्य तनयौ युवाम् इति कथयित्वा बाहू प्रससार। तौ च तं साष्टांगं प्रणेमतुः। एतत्सर्वं विलोक्य सर्वेऽपि कुटीरस्थाः स्तब्धीभूताः। कौतूहलपरवशो कुटीराध्यक्षः परिचयमपृच्छत्। अथ गौरसिंहः धैर्यमाधाय वक्तुं प्रारभत। मम जन्म भूः राजपुत्र-देशोऽस्ति। तत्रान्यतमो भूस्वामी खड्ग सिंहनामा मम तातचरण आसीत्। पिता युद्धे हतः। मम जननी तु ततोऽपि पूर्वमेव स्वर्गं सनाथितवती। आवामेकदा आखेटार्थं निर्गतौ। मार्ग-परिभ्रष्टौ दस्युवारेण निगृहीतौ। सुरूपौ उच्चवंशोद्भवौ एतौ महता मूल्येन विक्रेतुं योग्यौ इति परस्परं सम्मन्त्र्य आवयोः वधः नय कृतः। अथ एकदा सर्वेऽपि लुण्ठकाः पथिकान् लुण्ठितुं गताः तदाऽऽवाभ्यामपि पलायनावसरो लब्धः, यावदेवावां वस्त्राणि परिधाय छुरिकां कट्यामासज्य आत्मोत्तोलनयोग्यां भुशुण्डिकां चैकां करे गृहीत्वा शिविराद् वहिर्जिगमिषावः तावदेव पश्यामो यदेको रक्षको नौ गमनात् वारयति। ततः आवाभ्याम् भुशुण्डिकां सन्धायोक्तम् —तत्रैव तिष्ठ पदमेकमपि चलिष्यसि चेत् यमसदनं प्रापयिष्यसे : एवं भयात् काष्टीभूते तस्मिन् द्वौ प्रवणौ आजानेयावत्मुच्य ताभ्यां प्रधावमानौ गव्यति पञ्चकमतिक्रम्य कामपि ग्रामा-

टिकामासाद्य, तत्र हनुमन्मन्दिरं प्रविष्टौ। तदध्यक्षेण नौ निवासादि प्रबन्धः साधु सम्पादितः। भोजनादिकं कृत्वा चन्द्रिकायां पर्यटन भित्तिकां समाश्रित्य विविधाभिः चिन्ताभिराकुलो गतसंज्ञोऽहं भूमौ समपतम्। चेतनां प्राप्य अपश्यं यत् श्यामसिंहो मन्दिरपूजकश्च मामुत्थापयतीति।

अथ सः साधुः मन्दिरान्तर्नीत्वा उपावेशयत्। हनुमन्मूर्तिं दृष्ट्वा आवयोः हृदये धैर्योदयः संजातः! ततो मया साधोश्चरणयोः निपत्य प्रार्थितम् नास्त्यविदितं किमपि भवतः; अतः किमावां करवावः कुत्र गच्छाव इति निर्दिशतु भवान् पन्थानम्। सोऽपि इष्टदेवं ध्यात्वा क्रमुकफलमेकं मह्यं दत्त्वा यन्त्रस्यान्यतमे कोष्ठे स्थापयितुमादिदेश। मया तथानुष्ठिते अङ्गुलि-पर्वसु किमपि गणयित्वैव सोऽवदत्। भवद्भ्यां निजगृहं प्रति न निर्वतितव्यम्। मार्गे बहवः कम्बोजीयाः दस्यवो भवतो ग्रहणाय विचरन्ति। आक्रमणैः पीड़िता भवतो ग्रामवासिनः अन्यत्र गताः सन्ति। भवतः पुरोहितोऽपि रत्ननिधिं सुरक्षिते स्थाने संस्थाप्य भवतः भगिनीं सह नीत्वा महाराष्ट्र देशं गतोऽस्ति। भवद्भ्यामपि तत्रैव गन्तव्यम्।

अपरेद्युः तदाज्ञया सरसि स्नात्वा वस्त्राणि परिधाय तेन दत्तैः सहायकैः सह महाराष्ट्रदेशं प्राप्तौ। तत्र भीमानद्यास्तटे स्नानं कुर्वतोः आवयोः कोंऽपि अश्वारोही समीपमागत्य रात्रौ भवद्विषये दृष्टस्वप्नो महाराष्ट्र-राजः भवन्तो स्मरति इत्युवाच। आवामपि यथासमयं शिववीरं साक्षात्कृत-वन्तौ। तं साक्षात्कृत्य ज्ञातं यत् यः महानुभावः आवां भीमानद्यास्तटे अमिलत् स शिववीर एव आसीत्। ततः प्रभृति महाराष्ट्रराजस्यैव कर-कमलच्छायायां वसावः।

इदानीं भगिनीं सौवर्णीं पुरोहितञ्च, प्राप्तवन्तौ अतः इतः परं किं संभाव्यते। एष आवयोः वृत्तान्तः। ततः ब्रह्मचारि गुरोराज्ञया देवशर्मणा तोरणदुर्गसमीपे हनूमन्मन्दिरे निवासः स्वीकृतः। तत्प्रबन्धार्थं सर्वे कुटीरा-दुत्थिताः।

## 4. चतुर्थनिश्वासस्य कथासारः

मासोऽयमाषाढः। अस्तं जिगमिषति भगवान् सूर्यः। पर्वतश्रेणी

रतिक्राम्यन् सुघटित शरीररावयवः कुञ्चितकेशैः परिलसित-मुखमण्डलो हयारूढो युवा शिववीरस्य पत्रमादाय सिंहदुर्गात् तोरणदुर्गं प्रति गच्छति स्म । सहसा यदा झञ्झावातः समुत्थितः मेघमालाभिः अन्धकारो द्विगुणीभूतः । विकटेऽस्मिन् मार्गे यद्यपि पर्वतश्रेणीतः पर्वतश्रेणी वनाद् वनानि प्रपातात्प्रपाताः समायान्ति हयस्य खुरा मसृण-पाषाण-खण्डेषु प्रस्खलन्ति तथापि स्व कार्यात् न विरमति । अथ तस्याश्वः शाखयैकया तथाभिहतः यथोच्छलन् भूमौ पपात, सादिनं चैकतः समपीपतत । परमयं वीरः सहसा समुत्थाय स्ववस्तूनि वृक्षशाखायामासज्य अश्वस्य वल्गां गृहीत्वा स्वेद-परिव्याप्तमेनं भ्रमितुमारब्धवान् । यावत् विगतपरिश्रमं अश्वमारोढुमिच्छति तावत् वर्षितुमारब्धः मघवा । वर्षणमगणयन् अश्व-मारूढोऽयं प्रचलितः । अचिरादेव विरतां दृष्टिः । सम्मुखे तोरण-दुर्ग-प्रदीपः समदृश्यत । प्रहरि प्रचारभूमिः च समायातः । को भवान्, कुतो भवान्, इति यामिकेन पृष्टः दत्तनिजपरिचयः सः सादो दुर्गान्तः प्रविवेश ।

अश्वमुन्मुच्य अलब्धविश्रान्तिरेव-दुर्गाध्यक्षस्य समीपमगमत । कुशल प्रश्नानन्तरं पत्रमेकं तस्मै प्रादात् । अल्पवयस्कोऽयं कथमीदृशीषु गूढासु वार्तासु, शिववीरेण नियुक्तः, मयास्मै समुत्तरं देयं न वा, इति दोलायमानेन मनसा दुर्गाध्यक्षः तं परीक्ष्य, योग्यञ्चाभिज्ञाय नितरां प्रासीदत् ।

ततः स युवा दुर्गाद् बहिः हनुमन्मन्दिरे रात्रिमतिवाह्य इति दुर्गाध्यक्षेण आदिष्टः, अनुचरेण सह निवासायोपकल्पितानामन्यतमे प्रकोष्ठे आगत्य आवश्यकं निर्वर्त्य, यावत् विश्रमितुमभिलषति तावदेव आसन्नायाः वाटिकायाः मधुरगीतिस्वरं श्रुत्वा कर्णयोराकृष्ट इव तत्र एव प्रचलितः । सः वाटिकायां प्रविश्य एकस्मिन् मञ्चे समुपविष्टां कन्यकामेकां ददर्श । तस्याः दर्शनेनैव आत्मानं विस्मृतवान् । समयानन्तरं सा सौवर्णि, सौवर्णि । तातस्त्वामाकारयति, इत्याकारितां इमं दृष्ट्वा स गतिस्तम्भं कन्धरां परिवर्त्य प्रचलिता गृहमेकं प्रविष्टा । अथायं सादी प्रति-निवृत्य, स्वकोष्ठं समायातः, पर्य्यङ्के समुपाविशत् । शिववीरस्य करणीय-

कार्येषु अवशिष्टमेकं संस्मृत्य सहसोत्थाय मन्दिर-पुरोहित-गृहं प्रविष्टः । तत्रैकस्मिन् प्रकोष्ठे निद्रा मन्थरस्य वृद्धस्य पादसंवाहनपरं छात्रमेकमपश्यत् । उचिताचारानन्तरं स्वपरिचयं दत्वा उपविष्टः ।

न्यवेदयच्च भगवन् भगवन्तं प्रणम्य महाराष्ट्रराजः पृच्छति यत् यवनैः सह प्रवृद्धं मे वैरम् । इदानीं दिल्लीश्वरेणापि युद्धमुपक्रान्तम् । यद्यपि अल्पीयांसो मे वीराः युद्धकुशलाः तथापि मध्ये संशेते मे हृदयम् । भवान् अस्मद्देशस्य दैवज्ञशिरोमणि ; अतः विचार्य कथ्यतां किं भावीति । स वृद्धः तस्मै हनुमत्प्रसादं मोदकं मालिकाङ्कैकां सौवर्णी हस्तेन दत्वा उक्तवान् गच्छ निद्रासुखमनुभव । यादृशं स्वप्नं द्रक्ष्यसि त्वं प्रातरागत्य कथयिष्यसि ।

अथ प्रातरुत्थाय यावत् सः देवशर्माणमुपस्थातुमिच्छति तावत् दुर्गाध्यक्षस्यानुचरः आगत्य निवेदितवान् दुर्गाध्यक्षः भवन्तमाह्लयति । ततः दुर्गाध्यक्षस्य सन्देशमादाय देवशर्मणः पार्श्वे गत्वा रात्रौ दृष्टस्वप्नं समचकथयत् । सोऽपि अंगुलि पर्वसु किमपि गणयित्वा यवनैः सह युद्धे विजयः आर्यैश्च पराजयः, इति प्रोवाच । ततो हनुमत्प्रसाद-सिन्दूरं गृहीत्वा अश्वमारुह्य सिंहदुर्गं प्रतिनिवृत्तः ।

## 5. पञ्चम-निश्वासस्य कथासारः

दिल्लीश्वरेण प्रेषितः शास्तिखानः पुण्यनगरं दुर्गञ्च शिववीर हस्तादाच्छिद्य सपरिवारः तत्रभवने निवसति स्म । परस्परं सर्वदैव छलाऽऽशङ्काभि; युद्धशङ्काभिश्च स्थीयते । अथ कदाचित् रजनीकर-धवलितायां रजन्यां पर्यटन् शिववीरः शिवमन्दिरं प्राप्त; । तत्र श्रमक्लान्तमुत्थायोत्थाय भुवि विलुण्ठन्तं कश्चनाश्वमद्राक्षीत् । कस्यायम् कुतोऽयम् इति जिज्ञासमानः समुपसृत्य अश्वपालमपृच्छत् कुत आगता यूयमिति । स तु अन्यमनस्कोऽनुत्तरयन्, पौनः पुन्येन पृष्ट; सक्रोधमवादीत् । कुत आगता यूयम् कुत आगता यूयम् इति कुकुत्कारैः स्फोटितौ मे कर्णौ । वयं दिल्लीतो आगताः दिल्लीतः दिल्लीतः, कथय गजं दास्यसि घोटकं वा । शिववीरस्तु तस्य प्रकृतिं ज्ञात्वा परिवृत्य मन्दिरस्य पृष्ठभागे भ्रमितुमारब्धः । अथ कस्यापि

पान्थस्य वचो निशम्य, भूषणकविरयं दिल्लीश्वरं परित्यज्य समायातः इति निश्चित्य प्रणम्य, घण्टामाहृत्य, तेन पान्थेन चिरमालपत् । तद् विषये आत्मानं सम्यक् परिचाय्य, श्वो द्रष्टा भवान् शिववीरम् इत्यभिधाय प्रतिनिवृत्तः । पृष्टश्च तेन को भवान् ? एतद् देशीयः कश्चिद्वीरोऽस्ति. इति समुदतीतरत् । अन्येद्युः समापितनित्यक्रियः शिवः निजसभायां भृत्यद्वारा भूषणकविमाकारयत । सोऽपि च विहितसमुचितवेषः करकलित श्री फलोपायनादिकः विजयतां महाराज, इति समुच्चार्य उपहारं शिववीरहस्ते अर्पयामास । निर्दिष्टस्थाने समुपविश्य तं दृष्टपूर्व एवायं इति पर्यचिनोत् पर्यतुष्यच्च । स कवितामेकां शिवीर-विषयिणीं श्रोतृणामाग्रहेण एकविंशतिवारं पठितवान् । शिवेनापि तुष्टेन तस्मै गजानामेकविंशतिः दत्ता । ततः प्रभृति भूषणकविः तेन स्वसभायां संस्थापितः । इतश्च एकदा शास्तिखानः पुण्य नगरदुर्गे भृत्यवर्गैः परिवृतोऽतिष्टत् । सः वदरदीन प्रभृतीन् नगरप्रबन्धविषये पृष्ट्वान् । ते च सर्वं सुसिद्धम्, इति व्याहार्षुः ।

तत्र बहुविधाश्चान्यै महाराष्ट्रैः सह युद्धविषये मन्त्रणा अक्रियन्त । सर्वे चाटुकाराः परितोषयितुं तदुक्तीरभिनन्दुः । एष चान्द्रखान नामा यवनः सत्यवादी, हितेच्छुकश्चासीत् । परमदूरदर्शितया शास्तिखानेन तस्य परामर्शाः सोपहासमवहेलिताः ।

अत्रान्तरे सेनानिवेशः, शयनागारम् रक्षकावासः इत्यादिकाः तद् दुर्गं परिस्थितीरध्येतुं महादेव-पण्डित-वेषमाकलय्य शिववीरस्तत्र सम्प्राप्तः । सन्धि-विषये बहुश आलप्य प्रतिनिवर्तमानो दुर्गं निपुणं निरीक्षितवान् । सर्वाञ्च दुर्गव्यवस्थां परिशीलितवान् ।

## 6. षष्ठ निश्वासस्य कथासारः

मालश्रीकनामा शिववीरस्य परमं मित्रं महादेव-पण्डित वेषेण शत्रुभवनं प्रविविक्षुः । तं दृष्ट्वा तदनुमत्या यवनयतिवेषेण दुर्गं परितः परिभ्रमन् सूक्ष्मया दृशा निखिलं वीक्ष्य एकस्मिन् स्थाने समुपाविशत् । आसीनस्य तस्य हृदये विविधा विचाराः पयोधि तरंगा इव प्रादुरभवन् व्यलीयन्त च ।

नयनयोरविरलाश्रुधारा प्रववृते । तं तथा वाष्पाम्बुधौताननं दृष्ट्वा मार्गे गच्छन्तो बहवो यवनाः महानयं सिद्धयोगी, इति आलपन्तः तं परिवव्रुः । अथ किञ्चित् कालान्तरं ध्यानभंगे जाते लशुनगन्धिभिः श्वासप्रश्वासैरुत्ते-जयतः तान् यवनान् दृष्ट्वा सक्रोधो वाद्यमुत्तोल्य ताडयितुमुत्थितः । भयेन सर्वेषु इतस्ततः पलायितेषु शास्तिखानभवनान्निवृत्तो महादेव-पण्डितोऽपि तत्रागत्य तमपृच्छत् स्वामिन् किमिव कुपितोऽसि । सतु तमपि ताड़यितुमिव प्रवृत्त इति महादेव पण्डितोऽपि सान्धकारायामेकस्यां वीथिकायां प्रविष्टः । यवनयतिरपि तमनुययौ । उभावपि मार्गद्वयेन एकं भग्नमन्दिर-खण्डं प्राप्तौ । तत्रापराभ्यां संन्यासिभ्यां सह एकत्रोपविष्टौ संकेतेन वरयात्रा-विषये समालप्य यावत् किमपि विवक्षति तावत् अकस्मादेव महादेवस्य वक्षो लक्ष्यीकृत्य प्रक्षिप्तो लक्ष्यात् परिभ्रष्टश्च वाणः स्कन्धे निपपात । यावत्ते चकिता इव पश्यन्ति तावत् शक्तिरेका महादेववक्षं चुचुम्ब । सा शक्तिः अन्तर्लौहवर्म्माघातेन सझणत्कारं परतः अपतत् । परया स्फूर्त्या महादेवपण्डितस्तं प्रहर्तारं चान्द्रखानं कथावशेषं व्यधात् । सर्वे च ते तं एकस्मिन् गर्ते सम्पात्य इष्टकाभिराच्छादितवन्तः । महादेव-पण्डितः पुनर्मन्दं मन्दं किञ्चिदालप्य शास्तिखान-पत्रसाहाय्येन नगरात् वहिराजगाम ।

तत्र शाखि कुले निलीनोऽन्धतमसे वृक्षस्याधस्तात् अश्वमारूढ़मपरस्य निजार्थमानीतस्य आजानेयस्य वल्गां सयम्य प्रतीक्षमाणं गौरसिंह-मपश्यत् । यशस्विसिंहो महादेवपण्डितं प्रतीक्षते इति गौरात् सन्देशं प्राप्य तम्प्रति प्रस्थितो महादेवपण्डितः ।

शिवेन सह योद्धुमागतं यशस्विसिंहं प्रबलया स्ववाग्मितया स्वपक्षे विधाय शिववीरः आत्मपरिचयं दत्तवान् । सोऽपि अस्य साहाय्यार्थं प्रत्य-ज्ञास्त । महादेव-पण्डितः वेशधारो शिवः निशीथ एव प्रतिनिवृत्तः इति ।

## 7. सप्तमनिश्वासस्य कथासारः

अस्माभिः बहुकालं यावत् सान्धकारासु पुण्य नगरवीथिकासु भ्रान्तम् । आगम्यतां साम्प्रतं तोरणदुर्गस्य रमणीयोद्याने विहरामो वयमिति । दृश्यतां

एकस्य वृक्षस्य शाखायामवलम्बितां दोलां द्वे ललने दोलयतः। तयोर्मध्ये ताभ्यामीषन्न्यूनवयस्का कुमारी दृश्यते। दोलायां प्रवृद्धेन वेगेन पतन-भयात् वेपमाना त्रुट्यता स्वरेण, ते उभेऽपि दोलां स्थगयितुं चक्रन्द। सान्त्वयमानापि यदा धृतिं न अविन्दत तदा ताभ्यां दोला स्थगिता। ततस्तिस्रोऽपि हरित शाद्बलेषु मञ्चेषु समुपविष्टाः। उभे ते सौवर्णी-मभिलक्ष्य शृंगारवार्तासु प्रवृत्ते। सा तु उद्विग्नेव यदा उत्थाय गन्तुमियेष, तदा ते तां साग्रहं समुपवेश्य अपृच्छताम्, सौवर्णि! त्वाम् आवाभ्यां विरहिता एकाकिन्यपि उद्यानेऽस्मिन् उपविश्य चिरं स्ववदनमश्रुधाराभिः स्नपयसि, उच्छ्वसिषि, ग्लायसि, आत्मानञ्च विस्मृत्य पृष्ठतः स्थिते आवामपि न पश्यसि? का खलु व्यथा ते हृदये। विश्वसिहि आवां तवानन्यसख्यौ सर्वं कथय यथाशक्ति यतिष्यावहे तन्निवृत्तये। सा तु कथं-कथमपि सर्वं रघुवीरानुरागवृत्तमचकथत्।

ते उभेऽपि केनाप्याकारिते तां सान्त्वयित्वा गृहम्प्रविष्टे। इयं सौवर्णी आत्मानं विस्मृत्य दन्तफलके लिखितां रघुवीर प्रतिकृतिं चिरं विलोकयन्ती रघुवीरेणादर्शि। ततस्तयोः बहवो प्रेमालापाः समभूवन्। किञ्चित् कालानन्तरं देवशर्मवटुनाहूता सौवर्णी स्वगृहं प्रति गतवती। इतो देवशर्मणो पुरोहितस्योपवेश-भवने समुपविष्टो गौरसिंहः सौवर्ण्याः विवाहविषये समालपति स्म। तदनन्तरं रघुवीरसिंहोऽपि तत्रोपातिष्ठत। स देवशर्माणं प्रणम्य गौरमुवाच क्षम्यतां श्रीमन्? किमप्यावश्यकं निवेदयितुकामोऽस्मि। तेनाभ्यनुज्ञातश्च अत्र क्रोशद्वयान्तराले यवनसादिभिः सुरक्षिता शिविका नीयते। मन्ये गोलखण्ड-पर्यन्तं समायातं दिल्लीश्वरं द्रष्टुं तत् पुत्री रसनारी समायाति। तदत्रार्थाः प्रमाणमिति न्यवीविदत्।

स तु दिल्लीश्वरं प्रति समृद्धकोपो देवशर्माणमापृच्छ्य, रसनार्याः अपहरणाय कतिपयान् सहायकान् नीत्वा प्रस्थितः। मार्गे चैकत्र रमणीय-स्यैकस्य तड़ागस्य तीरे रमणीयं स्थानमिदं दृष्ट्वा तैरत्र अवश्यं विश्रमिष्यते इति निश्चित्य परितो विकसितेषु कुसुमेषु किमपि मूर्च्छावहं द्रव्यं निचिक्षेप।

ससहायको स्वयमपि निलीय स्थितः। अथ विविक्ता समायाता। सर्वेऽपि च ते रमणीयमिदं स्थानम् अत्रैव विश्राम्यताम् इति कथयन्तः तत्रैव विरेमुः। अत्रान्तरे वृद्धवेषेण गौरसिंहः लगुड़हस्तः पिटकमेकं वहन् दृष्टः। ते तस्य पिटकं बलादाच्छिद्य तत्रस्थान् मोदकान् बुभुजिरे। गौरस्तु कपटक्रन्दनं कुर्वन् गतः। इतः ते जलं पीत्वा पुष्पाणि समाघ्राय अशेरत। दैवयोगेन वर्षणमपि समपद्यत येन निद्रा गाढ़तराऽभवत्। तथाविधान् तानालोक्य महाराष्ट्रवीरैः सह गौरसिंहः समागतः। महाराष्ट्रवीरा उष्णीषाश्चादाय आत्मानम् अलंकृत्य अश्वमुन्मुच्य शिविकां वहन्तः तोरण-दुर्गाभिमुखं प्रस्थिताः। तत्र रसनारीं संस्थाप्य तां समुचिताचारैः सत्कर्तुं दुर्गाध्यक्षं कथयित्वा गौरसिंहः अश्वमारुह्य सिंहदुर्गं प्रति ययौ।

आसीदस्तमयः समयः। शिववीरः पुण्य नगर दुर्गाक्रमणाय सेनां सज्जीकृत्य अत्युच्चायामेकस्यामट्टालिकायां स्थित्वा पुण्यनगरं दूरवीक्षण-यन्त्रेण निपुणं निरीक्ष्य, यावत् नीचैरवतीर्णो मुरेश्वरादिभिः आलपति तावत् गौरसिंहः प्रविश्य, प्रणम्य, नूतनं वृत्तं पृष्टः प्रोवाच, महाराज वरयात्रायां प्रागेव वधूप्रवेशो जातः। सर्वेषु चकितेषु रसनारी निग्रहोदन्तं विशकलय्य समचकथयत्। श्रुत्वा च सर्वे मुमुदिरे।

हरहर महादेव ! ध्वनिना रोदसी पूरयन्ती महाराष्ट्रचमूर्दुर्गा-दवातरत्। दुर्गादारभ्य पुण्यनगर-पर्य्यन्तं सर्वाऽपि अदीप-प्रकाशाः निःशब्दाः प्रगाढ़ेऽन्धकारे निवेशिता। स्वयञ्च शिववीरः कतिचित् सैनिकैः सह पुण्यनगरे प्रवेशद्वारि समीप एव समतिष्ठत। तावत् सशब्दैः—समायातेयं वरयात्रा। महाराष्ट्राः अपि एनया सहैव सुखेन नगरं प्रविष्टाः। शास्तिखानभवनस्याग्रतो गतेयं वरयात्रा। महाराष्ट्राः भवनस्य समीप एव इतस्ततः आत्मानमावृत्य अतिष्ठन्। कालान्तरे शान्तोऽयं कलकलः। महाराष्ट्राः भित्तिं विदार्य अन्तः प्रविष्टाः। युद्धञ्च प्रवृत्तं यवनैः सह। शिववीरः शास्तिखानमन्विष्यन् अन्तःपुरं गच्छन यवनयुवकेनैकेन न्यरूध्यत। शिववीरः तं चान्द्रखानसुतं परिचित्य, तस्मिन् दयमानः तं पलायितुं कथितवान्।

सः उत्प्लुत्य शिवे प्रहरन् रघुवीरेण शस्त्रप्रहारेण भूमौ शायितः।

इत्थं रघुवीरादि सहायो शिववीरः महता कौशलेन दुर्गं हस्तितवान् । शास्तिखानो गवाक्षमार्गेण स्वस्त्रीः नीचैरवतार्य पलायितः । ततः शिवस्यादेशात् दिल्लीश्वर नामांकितान् पित्तलादि फलकान् सवस्त्रान् सशस्त्रानपरिधाय दर्शकानां यवन भटभ्रममुत्पादयन्तः सुखेन पुण्यनगरात् बहिरागत्य तत्र सज्जां सेनां नगरे दुर्गे च विनियुज्य, सिंहदुर्गं प्रतिययुः ।

इति सप्तम निश्वासः ।

## अष्टम निश्वासस्य कथासारः

तोरणदुर्गे गतसंज्ञाभिः प्रबोध्यमानाभिः मूर्च्छामालिङ्गन्तीभिः शरीरपरिचारिकाभिः सह विविधसामग्री निचयेन, सत्क्रियमाणा चकितचकितेव क्वाहं समायाता ? किमर्थमपहृतास्मि ? किं निदानम् । एषोऽत्यर्थमादरः । कथं चाहं कमपि मर्यादाभंगं न पश्यामि इति पर्य्याकुला रसनारी, वारंवारं तत्स्थान-परिचयं पप्रच्छ । परं ता वाचंयमा एवातिष्ठन् । एकस्मिन् दिवसे सा गवाक्षमार्गे शाद्वलानां विविधाः शोभा अवलोकयन्ती ईषच्छ्यामलं बहुभिः भटैः सत्क्रियमाणा कमपि विलोक्य अयमेव लुण्ठकमण्डलस्य स्वामी इति तर्कितवती । तञ्च युवकं प्रकोष्ठाभिमुखमेवायान्तं दृष्ट्वा किञ्चिद् भीता द्वारदेशमागत्य स्थितवती ।

अथ प्रतिसीरामुत्क्षिप्य शिरोनमनपुरस्सरं शिववीरः प्रविष्टः । सापि तस्याचारेण विस्मितेव 'आस्यतामास्यतामासान्द्याम्' इति समभाषत । ततस्तयोः बहुविधालापाः समभूवन् । परस्परमनुरागश्च संजातः । ततः तस्यानुमतिमासाद्य सिंहदुर्गं प्रत्यगच्छत् शिवः । मार्गे च माल्यश्रीकः तस्य कर्णयोः योद्धुमागतो मायाजिह्मो निगृहीतोऽस्माभिः इति न्यवेदयत् ।

तद् विशकलय्य श्रोतुकामे शिववीरे स उवाच, श्रीमन् ! गौरसिंहः प्रकृत्या सुन्दरः तत्रापि दिवाकीर्तिमाहूय मसृणमुखो भूत्वा पद्मिनीमाकलय्य, शिविकया मायाजिह्म भवनं गत्वा, महाराष्ट्रदेशस्य प्रसिद्धा-वेश्या पद्मिनी नाम्नी समायातेति भृत्यद्वारा समसूसुचत् । स तु वेश्या-

रमण व्यसनी वेश्या नाम श्रुत्वैव मोदमाकलयन् अन्तः प्रवेष्टुमाज्ञापयत् । ततः सा पद्मिनी अन्तःप्रविश्य विविधश्रृंगारवार्ताः परिहासञ्च कर्तुमारेभे । नयनकटाक्षपातैः मनोहरन्ती ताम्बूलवीटिकां तस्मै प्रादात् । मोमुद्यमानः वीटिकामास्वाद्य मायाजिह्वो शिश्ये । ततः मादकद्रव्यमिश्रितं परिमलं तस्य नासायां संयोज्य तं मूर्च्छयित्वा निजवस्त्रैः समलङ्कृत्य द्वारपालानां चक्षुषुः रेणुराशिं प्रक्षिप्य, मायाजिह्वञ्चापहृत्य च सहचरीभिः गौरसिंहः बहिर्निर्गतः ।

सः माया भवने स्थापनीयः इति तम् आदिश्य अग्रे प्रचलितः । ततः विजयध्वजनाम्नः सेनापतेः पत्रेण, "शतं पोतः, सुरत नगरं कोंकणदेशः खानदेशश्च भवतः हस्तगतः संवृत्तः इति समाचारं प्राप । सिंहदुर्गे युष्माभिरुत्तरं लप्स्यतेः इत्याभाष्य तैः सन्देशहरैः सह सिंहदुर्गं ययौ ।

इतश्च कुटीरे गौरेण अपहृत्य समानीतं मायाजिह्वं विलोक्य सर्वेऽपि नितरां मुमुदिरे । पर्यायेण तमालिङ्गतवन्तश्च । गौरसिंहः प्रकृतवेषं धारितवान् । इतः लब्धसंज्ञो मायाजिह्वश्चकित एव द्रष्टुमारब्धः । कुटीरस्थ शाद्वले समुपविश्य सर्वे गौरेण वर्णितं मायाजिह्वापहरणवृत्तान्तं शुश्रुवः । ततः ब्रह्मचारिगुरुः स्वातीतदुर्घटनाभय-वृत्तान्तं श्रावयितुमारभत । नाहं महाराष्ट्रदेशीयः ।

राजपुत्रदेशे जिनवारनामा ग्रामाध्यक्षोऽहं, महाराज जयसिंहस्य बन्धुः, सेनानियमेन तदधीनो भुवं भुञ्जानो न्यवसम् । एकदा कैश्चित् कर्णेजपैः प्रेरितो महाराजः । विनैव सूचनां समागत्य न्यूनां सैनिक-संख्यामालोक्य सक्रोधो मम सर्वस्वमाहर्तुम् अघोषयत् । खिन्नोऽहं स्वतनयं सह नयन् द्वारिकां गत्वा पोतमारुह्य रामेश्वरयात्रार्थं प्रचलितः । मम पत्नी इतोऽपि पूर्वमेव मृतासीत् । अथ सागरे झञ्झावातेन समुत्थित-तरंगेण पोतो दोलायितुमारब्धः । मम पुरोहितो रामसिंहस्य करं गृहीत्वा समुवाच, "नायमवसरः शोकस्य" सन्त्यत्र च बहवो कार्पास भाराः ! तैः सहात्मानमाबध्य स्वयं येन जलान्तः न निमज्जेम् । इत्युक्त्वा रामसिंहः स्वपृष्ठे बद्ध्वा कार्पासभारमानीय, तद्दत्त हस्तावलम्बनः तस्थौ । अहमपि तथातिष्ठम् । अत्रान्तरे पोतो जलान्तरे निमग्नःततः दैवेन मम पुत्रपुरोहितयोः

च सहयोगोऽपि नामर्षितः । अन्ततः स रामसिंहो नयनयोः पन्थानमतीतः । ततो न जाने कथं रात्रिर्गतेति । प्रातः समुदिते दिवसकरे प्रशान्ते च झञ्झावाते अहं पुरोहितं रामसिंहं च नैवापश्यम् । क्षणानन्तरं एकस्मिन् पोते स्थापितोऽहं तैलमर्दनादिभिः प्राप्तसंज्ञः सुरते नगरे आत्मानं अपश्यम् । ततः मन्दिरमेकं प्राप्य तदध्यक्षेण चिकित्सितः नीरोगोऽहं जातः । एकदा अहं तं रामसिंहपुरोहितयोः विषयेऽपृच्छम् । स महात्मा उवाच भवतोऽपेक्षयाऽधिकं कुशलिनौ तौ, मन्त्रोऽयं जप्यताम् । तस्य विवाह समये तव साक्षात्कारो भविता । ततोऽहं महाराष्ट्र देशे समायातः ।

एकदा भीमा नद्यास्तटे एकेन लुण्ठकेन सह मम मेलनमभूत् । तमहं तेन प्रकारेण चपेटया ताडितवान् येन स भुवमालिलिङ्ग ः । एतत्सर्वं दूरादेव दृष्ट्वा शिववीरः मयि प्रसन्नः सन् मम सेवायां सेवकम् नियुज्य कुटीरे मामस्थापयत् । एवं आलपतोरेव रघुवीरः प्राप्तः स प्रणमन् गौर-सिंह उवाच—महाराजो भवन्तं द्रष्टुमिच्छति गौरोऽपि अनुमतिमासाद्य सिंहदुर्गं प्रचलितः । मार्गे रघुवीरः अश्वं जलं पाययित्वा विश्रम्य, सिंह-दुर्गं प्रचलितोऽपि तोरणदुर्गमायातः । तत्र वाटिकायां सौवर्णीमपश्यत् । सा अवदत् सुसमये समायातोऽसि, तव समक्षे एव शाखि-शाखायां आत्मान-मोवध्य प्राणांस्त्यजामि इति कथयन्ती क्रूरस्य-क्रूरं वृत्तं न्यवेदयत् । रघुवीरः तां सान्त्वयित्वा सिंहदुर्गं प्रस्थितः । दैवसंयोगेन शिवस्यादेशेन तोरण-दुर्गे नियुक्तः, क्रूरो अन्यत्र प्रयातः । इतो मायाजिह्मः शिवस्योदारतया मुग्धः स्वपितरि घृणामावहत् । शिवेन प्रेषितः महाराष्ट्रभटः समा-गत्य मायाजिह्मं दुर्गाणि समदर्शयत् । दुर्गाणि वीक्ष्य सः भवनं प्रति-निवृत्तः ।

श्यामसिंहः तं मायाभवने परित्यज्य, स्वयं महाराष्ट्रराजस्य विजयोत्सवे स्वर्णसिंहासने विराजितं शिववीरं द्रष्टुं राजदुर्गं प्रचलितः ।

इति अष्टमो निश्वासः ।

## 9. नवम निश्वासस्य कथासारः

ऋतुरेष शरत्। तथापि पुण्यनगर प्रान्ते अकाले कोकिल-कूजितानि दुःशकुनानि समवलोक्यन्ते। एकदा महाराष्ट्रराजः कुसुम वाटिकायां पर्यटन् यवनकन्यकामेकामपश्यत्। तस्याः मुखेन राजकुमार्याः रसनार्याः विरह-जन्यखेदं ज्ञात्वा तां प्रेष्य अचिरेण स्वयमपि तस्याः पार्श्वेऽगच्छत्। तत्र सप्रेम परस्परमालपतोस्तयोः दुर्गे वह्निः प्रादुरभूत्। ततो दौवारिकाणां 'वह्निः वह्निः' इति कोलाहलः समश्रूयत। भीतभीतां कृताश्लेषां रसनारीं मा भैषीः, इति व्याहरन् क्रोडे संस्थाप्य बहिराजगाम। कथं कथमपि जलयन्त्रैः अग्निः शमयाम्बभूव। रसनारीश्लेष लज्जितो शिववीरः लज्जिता च रसनारी निज निज भवनं प्रविविशतुः। अथाकस्मिकोऽयमग्निप्रकोपः सर्वथाऽशुभकरः। देवशर्मा दैवज्ञः प्रष्टव्यः अस्मिन् विषये, इत्यात्मीयैः उक्तः तं द्रष्टुं हनुमन्मन्दिरमयासीत्। दुर्गाद् बहिरागतमात्र एव कैश्चि-च्चरैः समसूचयत—महाराज, महता बलेन समावृतः जयसिंहो योद्धुं समायातोऽस्ति परश्व एव युद्धं प्रारिप्ससे। ततः शिववीरः समाथातः। तत्र मारुतिमूर्तिं दण्डकासनेन प्रणम्य, देवशर्माणं हवनपूजनादिकं विधातुं प्रोक्तः तत्सर्वं सम्पादयितुं पुरोहितमादिशत्। ततः जयसिंहेन सह युद्धं विधेयं न वा, इति पप्रच्छ। सोऽपि विचार्य उक्तवान्—एतेन सह युद्धे पराजय एव सन्धिरेव श्रेयान्, इति समुदीतरत् प्रसन्नो महाराष्ट्रराजः तं किमपि अभिलषितं याचितुम् अकथयत्—सोऽपि सौवर्ण्याः वर एव मार्गयितव्यः, इत्येवं अभिलाषं समसूचयत्। विशिष्य मार्गयिष्यामः इत्युक्त्वा महाराष्ट्रराजः प्रतिनिवृत्तः।

सिंहदुर्गे समागत्य स्वविश्वासपात्रं स्तन्यजीवं, माल्यश्रीकञ्च सन्धिवार्ताः स्थिरयितुं जयसिंहसाक्षात्काराय प्रैषयत्। भूषण कविरपि तयोः साहचर्यं व्यधात्। तावपि गत्वा प्रतिनिवृत्य सर्ववृत्तान्तं कथयित्वा सः भवन्तमेव, सन्धिविषये निर्णेतुं दिदृक्षते, इति समचकथताम्।

शिववीरः तं साक्षात्कृत्य, स्ववाग्मितया, देश-प्रेम्णा, जाति-गौरवेण,

यवनानामत्याचारकथनैश्च, तं वशयितुं नाशकत् । सन्धातुमेव विवशो जातः दिल्लीश्वरस्य सन्तोषार्थं तेन त्रीणि कार्याणि कथितानि, (1) प्रथमतो रसनारी प्रेषणीया । (2) द्वितीयतः मायाजिह्वः क्वाप्यत्र भ्रष्टः सोऽन्वेषणीयः । (3) तृतीयतश्च—विजयेश्वरेण सह युद्धं विधेयम् । ततो शिववीरः सर्वं साधयिष्यामि इत्यभिधाय सिंह-दुर्गं समागत्य, मात्रा सह चिरमालप्य एतच्चिन्ता-सन्तानैकतान एव सुष्वाप ।

अन्येद्युः रसनारीं जयसिंहागमनं, सन्धि-प्रस्तावं, मायजिह्व-विषयेऽपि सर्वसमाचारं शिववीरः समसूचयत् । ततः रसनारी माया-जिह्वेन अमिलत्, उभौ मिलित्वा अनिर्वचनीयां मुदम् अन्वभूताम् । ततः शिववीरः तौ जयसिंह द्वारा दिल्लीं प्रेषितवान् । तदनन्तरं विजयपुरेश्वरं प्रति योद्धुं समीपस्थं रुद्रमण्डलाभिधं दुर्गमाचक्राम । तत्र युद्धे रघुवीरः कौशलेन शिववीरं सर्वाधिकं समतोषयत् । एवं तद् दुर्गं महाराष्ट्र राजस्य हस्तगतं जातम् । हस्तिते दुर्गे तत्रैकोत्सवयोजनाऽभवत् । महाराज जयसिंहो निमन्त्रितः तत्र समायातः । महति सिंहासने समुपविष्टः । तस्य वामतः शिववीरः उभयोश्च कृपापात्राणि, पार्श्वतः पंक्तिं निर्माय तस्थुः । ततः शिवः दुर्गविजयवृत्तान्तमश्रावयत् । सैनिकानामुत्साहं वर्धयितुं पारितोषिकं जयसिंह-हस्तेन व्यतरत् । रघुवीरं विशिष्य प्रशशंस । तदनन्तरं शरणे स्थातुं प्रोक्तो रहोत्तमखानः शिववीरं समचकथत्, अनुग्रहोऽयं भवतः, परं स्वामिरिपोः शरणस्थितं, लज्जास्पदं मन्ये । अन्तेऽहं निवेदयामि यत्, भवत् सेनायां न सर्वेऽपि निष्कपटाः एकोऽस्मान् आक्रमण-विषयेऽसूचयत्, अन्यथा सुविधया जयः स्यात्, इत्युक्त्वा स गतः-ततः सक्रोधः शिवः पप्रच्छ । को रात्रौ विलम्बेन समायातः ?

सर्वेषु मौनेषु क्रूरसिंह उवाच, श्रीचरणानामेव कृपापात्रं विलम्बेन समायातः ।

कोऽसौ पृष्टः शिवेन क्रूर उवाच, रघुवीरः । शिववीरः प्रोक्तवान् ईर्ष्या परवशः एवं वक्षि ।

रघुवीरो जगाद—प्रभो ! सत्यं वक्ति क्रूरः ।

शिवेनोक्तम्—विलम्बस्य कारणं वद ।

स तु सौवर्ण्या सह सम्भाषणं विलम्बस्य कारणमिति निवेदयितुमसमर्थः पृष्टोऽपि तूष्णीक एव तस्थौ; अतः शिववीरेण सः निर्वासितः ।

गते रघुवीरे जयसिंहः शिववीरम् अवोचत्, महाराज ! दण्डविषये त्वरा न विधेया, अहमपि एकदा अविमृश्यकारितया स्वबन्धुं वीरेन्द्रसिंहं निर्वासितवानस्मि । साम्प्रतं तद् विरहेण खिद्ये । मन्येऽत्र विषयं बहु अनुसन्धानीयमवशिष्यते । अनुमन्यते चेत् श्वो विधास्यामि सम्यक् अनुसन्धानम् । शिववीरः तथा इति प्रतिपद्य माल्यश्रीकं गौरम् अन्यांश्च प्रातः तत्रोपस्थातुं सत्यञ्च वक्तुं समाज्ञापयत् । रघुवीरं रहोत्तम खानञ्चानेतुं सादिनो धाविताः । सन्ध्या समयं वीक्ष्य सर्वेऽपि समुत्तस्थुः ।

इति नवमो निश्वासः ।

## 10. दशम निश्वासस्य कथासारः

महाराजो जयसिंहो रात्रौ स्वप्नेषु रघुवीरसिंहं निर्दोषं पश्यन् प्रातरुत्थाय नैमित्तिकं निवर्त्य, रहोत्तमखानमपराधिनो विषयेऽपृच्छत् । स उवाच—श्रीमन् अस्त्येकः क्रूरसिंह-नामा, यस्य साहाय्येन शास्तिखानः पुण्यनगरं हस्तितवान् । स एवास्मानपि समसूचयत् । ततः कोपेन क्रूरमाकारयत् । स तु रात्रावेव भयेन कुत्रचित् पलायितः इति वृत्तमुपलभ्य, एषं दोषी निर्दोषो रघुवीरः इति निरणैषीत् । रघुवीरस्य मिथ्या कलङ्कमसहमानो गणेशशास्त्री समागत्य, रघुवीरं तस्य कुलं मर्यादाञ्च भृशं प्रशंसितवान् । तच्छ्रुत्वा जयसिंहः गणेशशास्त्रिण पृष्टवान्, रघुवीरस्य-परिचयं तावद् श्रावयतु भवानिति ।

गणेश शास्त्री उवाच—महाराज मन्ये स्मरति भवान्—जितवार-भूस्वामिनं स्वबन्धुं वीरेन्द्रसिंहम्, यं विनैवापराधं भवान् निरवासयत् ।

जयसिंहः—कथं न स्मरामि, अहन्तु पश्चात्तापैरात्मानं खेदयामि ।

गणेश शास्त्री—तस्यैवाहं पुरोहितः ।

जयसिंहः—आः स एव भवान् (प्रणनाम)

ततः जयसिंहे, वीरेन्द्रसिंहं वृत्तान्तं पृच्छति सति गणेशशास्त्री वक्तुमारभत।

महाराज, वयं सर्वेऽपि द्वारिकाधीशं द्रष्टुं गताः। ततो महता पोतेन मुम्बापुरीं निवर्तमानेषु अस्मासु पोतः झंञ्झावातेन समुद्रे न्यमज्जत्।

अहं रामसिंहश्च दैव-संयोगेन मुम्बापुरीं प्राप्नुवन्तौ, वीरेन्द्रसिंहो न जाने कुत्र गतः। जीवति वा न इत्यादि वक्तुमसमर्थोऽस्मि। इतः पुण्य-नगरे रामसिंहः निजदुःखकथया लज्जमानो रघुवीरसिंह इति नाम्ना आत्मानं परिचाय्य महाराष्ट्रचरेषु लब्धजीविकः संवृत्तः। इतः परं सर्वं विदित-मेव भवताम्। महाराजो जयसिंहः सखेदमवादीत् न जानेऽस्मिन् जन्मनि तस्य दर्शनं भवितृ न वा। जीवति न वा इति को वेत्ति। गौरोऽवादीत् महाराज, जीवति वीरवरो वीरेन्द्रः। अत्रैव कुटीरे तापसवेषेण तिष्ठति। कुमार रामसिंह-प्राप्त्यर्थं तपस्यति। तदनन्तरं जयसिंहः कुटीरं गत्वा तं ददर्श आलिलिङ्ग च। गणेशशास्त्री परिपूर्णेन मनसा तमालिलिङ्ग। ततस्तेषां बहवो दुःखमया आलापाः बभूवुः। अस्मिन्नेव समये शिववीरोऽपि तत्र प्राप्तः, खिन्नः समुवाच—ममैवावमृश्यकारितया गतो रामसिंहः, इति क्रिय समभिहारेण तमुवाच। अत्रान्तरे कश्चिदागत्य जयसिंहं न्यवीविदत् दिल्लीश्वरस्य पत्रमादाय कोऽपि समायातः। सन्देशं प्राप्य जयसिंहः स्व शिविरं ययौ। अन्तः प्रविश्य पत्रं पठित्वा, निर्मक्षिकं विधाय उवाच, दिल्लीश्वरः भवति प्रसीदति, भवन्तं सादरम् निमन्त्रयति च इति शिव-वीरं व्यजिज्ञपत। ततः बहु विचारविनिमयं कृत्वा जयसिंहस्य प्रतिज्ञां सम्मान्य, शिववीरः दिल्लीं गन्तुं स्वीचक्रे। गृहं च प्रतिनिवृत्तः।

तदनन्तरं रघुवीरस्य मिथ्या कलङ्केन विमनायमानो सौवर्णीम् एकदा तडागतीरे महादेव मन्दिरे शिवं संस्तुवन्तं कमपि संन्यासिनमप-श्यत्। तमुपसृत्य 'कमपि प्रष्टुं कामास्मि' इति सविनयं न्यवेदयत्, ततः स महात्मा कस्यापि क्षत्रिययूनः विषये भवत्याः प्रश्नः, सः मिथ्याकलङ्केन

तिरस्कृतो निर्वासितश्च अस्ति । कालान्तरे आत्म-पौरुषेण प्रभुं सन्तोष्य प्रकटितो भविष्यति सः । ततः तत्र क्रूरः समागतः । सौवर्णी दूषयितु-कामः सः संन्यासिना हतः । संन्यासी तां गृहं प्रापय्य क्वापि निलीनः । इतो महाराजः शिववीरः मित्रैः सम्मन्त्र्य दिल्लीं, गन्तुं निश्चिकाय । एकदा रात्रौ भटवेषेण पर्यटन् शिवः सन्यासिनं दृष्ट्वान् । स साधुः राघवाचार्य इति नाम्ना आत्मानं परिचाय्य विविधाभिः युक्तिभिः दिल्ली नगरं गमनात् शिववीरं वारयन् अन्तर्दधे । इतः शिववीरः शासनभारं स्वर्णदेवे समर्प्य जयसिंहसादिसंकेतेन दिल्लीं प्रतस्थे । प्रथमदिवसे क्रोशदशकमतिक्रम्य उपकारिका आयोज्य विशश्राम । अत्रापि राघवाचार्यः समागत्य प्रतिनिर्वतितुं शिवम् अकथयत् । गते च तस्मिन् भूषणप्रभृतिभिः गन्तुमेवानुरुध्यमानाः शिवः सम्मुखमायान्तं व्याघ्रमेकं दृष्ट्वा छुरिकया तस्योदरं विददार ।

अतिमाङ्गिलकमिदमिति तैः प्रोक्तो गन्तुमेव स्थिरीकृत्य उपकार्यां प्रविवेश । ततः विराटदेशं इन्द्रपुरं उज्जयिनीं गोपालपुरं समुल्लङ्घ्य बसन्ता-रम्भे दिल्लीनिकटं प्राप । तत्र सर्वेषु सुप्तेषु माल्यश्रीकसहायो शिववीरः रसनारी-दूतिकां ददर्श । तां निवर्त्य माल्यश्रीकेण सहान्तः प्रविष्टः सुष्वाप । परेद्युः कुमार रामसिंहः समागत्य पुष्परथेन दिल्लीश साक्षात्काराय शिववीरं राजभवनं निन्ये । सोऽपि कतिपयैः सादिभिः सह नगरस्य विविधाः शोभाः पश्यन् राजभवनं प्रविष्टः । तमन्तः तूष्णीम् अवरंगाधिष्ठितं भवनं प्रविश्य, वेदीमारुढ़ एव दक्षिणपाणिना मस्तकेन प्रणमन् मुद्रिकामेकानुपढ़ौकयत् । सोऽपि वाचंयम एव मुद्रिकां जग्राह । पाञ्चसाहस्त्रिकेषु स्थातुं संकेतितवान् । किं शिववीरः पाञ्चसाहस्त्रिकः ? सहस्त्रशः पाञ्चसाहस्त्रिकाः तं चामरैः वीजयन्ति इति कुमार रामसिंहः दत्तदृष्टिरेव समवोचत् । अवरंगजीवेन चक्षुषा वारितः सक्रोधो रामसिंहः तूष्णीं एव तस्थौ । ततः सभाभङ्गो जातः, जनसमूहश्च बहिरायातः । शिववीरोऽपि निवासाय निश्चिते भवने सम्प्राप्तः । रामसिंहश्च निवृत्तः ।

इति दशमो निश्वासः ।

## 11. एकादश-निश्वासस्य कथासार:

एकदा रात्रौ महाराष्ट्रराजो विविधचिन्तानिमग्न एव आसन्द्यामुपविष्ट आसीत् । सहसा कस्यापि पादध्वनिमश्रौषीत । कोऽप्ययं लुण्ठकः स्यात् इति मनसि निश्चिन्वन् विकोशच्छुरिकाहस्तः सप्रौढ़ि तमपृच्छत्, कस्त्वं रे—स तु कोऽप्ययं भवतः शुभचिन्तकः इत्यभिधाय समीपं समायातः । शिववीरो दीपप्रकाशं विधाय एनं राघवाचार्योऽयमिति परिचित्य, चकित एवाभूत । ततस्तयोः सम्प्रवर्तमाने आलापे राघवाचार्यः तं निस्सर्तुं प्रास्तावयत् । शिवः—मन्ये कश्चित् उपाय उद्भावितः पलायनस्य । राघवाचार्यः-किमज्ञातमार्याणाम् । तथापि कलितभिक्षु वेषो मया सह निःसरतु महराज । ततश्च नगरस्यास्य सर्वतः स्थिता या भित्तिः सा सशङ्कु वंशेन आरोढुं सुशका लम्बमानां शृंखलामेकामवलम्ब्य भूस्पर्शो न दुःशको महाराष्ट्राणाम् । तत्रान्धतमसे निलीने एकमश्वमारुह्य नातिदूरे कालिन्द्यां नौकामेकां द्रक्ष्यति महाराजः । ते नाविकाः भवन्तं मथुरां प्रापयिष्यन्ति । ततश्च येन केनापि पथा सुखेन गन्तुमर्हति श्रीमान् । ततः शिववीरः मार्गे प्रबन्धविषये विविधामाशंकां कृतवान् । राघवाचार्यः सर्वत्र प्रबन्धविषये महाराजं समसूचयत्, परन्तु दिल्लीं समागतां स्वसेनां विहाय गन्तुं नान्वमन्यत शिववीरः । श्वः प्रहरिप्रबन्धोभविता, इति कथयित्वा राघवाचार्यः चक्षुषामगोचरो जातः । अपरेद्युःप्रहरिप्रबन्धः संजातः । महाराष्ट्रगमनाज्ञामनुपलभ्य, महाराष्ट्रवीरः स्वसेनापतिं निवर्तनाय अवरंगजीवे न्यवेदयत् । अवरंगजीवः सहर्षं स्वीचकार । निर्गमनपात्रिकामादाय सेनाः प्रतिनिवृत्ताः । एकदा कुसुमविक्रेत्री एका यवनी शिवं रहसि आनीय, रसनार्याः सन्देशं श्रावितवती । अत्रान्तरे मायाजिह्मः समागतः । सोऽपि—"अहं गत्वा भवतः कुशलेन महाराष्ट्र गमनाय" पितरम् अभ्यर्थयामि इत्युक्त्वा प्रतिन्यवर्तत ।

इतोऽवरङ्गजीवः आरव्यकवेः आरव्यकविताः शृण्वन् आसीत् । स कविरपि काश्चित् कविताः श्रावयित्वा प्रसङ्गतः शिववीरं मोक्षं व्यंग्येन प्रास्तावयत् । ततः कुमार रामसिंहः समुपातिष्ठत । तं किंचित् रहस्य-

माख्यातुम् संलक्ष्य आरब्य कविः समुत्तस्थौ गतश्च । कुमारः प्रबलया विजयपुरसेनया समाश्रान्तेन स्वपित्रा जयसिंहेन, याचितं सेनासाहाय्यं, शिववीरस्य सकुशलं-निवर्तनाय जयसिंहस्य प्रतिज्ञाञ्च न्यवीविदत् । परं हताशः प्रतिनिवृत्तः, कुमार मायाजिह्मोऽपि समागत्य वितथप्रयत्नोऽभूत् ।

अन्येद्युः यवनराजवैद्यवेषे मुरेश्वरोऽन्तःप्रववेश । स सर्वं प्रबन्धं विशकलय्य प्रत्यपादयत् । प्रतिनिवृत्तश्च सायं गौरसिंहमाल्यश्रीकौ, विहङ्गिकावाह-वेषमाकलय्य शिववीरं मिष्टान्नपेटायां संस्थाप्य समुत्थाप्य नगरात् बहिः समायातौ । ततः सर्वे गृहीत संन्यासिवेषाः यमुना तीरे वृक्षस्यैकस्य नीचैः स्थितां स्वीयानश्वानारुह्य प्रचलिताः । मध्ये कैश्चित् सप्तभिः यवन सादिभिः सन्दिह्य समाक्रान्ताः । अकस्मात् तेषां त्रयः कुतश्चित् क्षिप्तैर्बाणैः हताः अपरे च तैर्हताः । सर्वेषां शवांश्च गर्तेषु निपातिताः । स्वरक्षकमन्विष्यद्भिरेव स एव राघवाचार्यो गृहीताश्वनियामक वेषो—अर्दशि समागच्छन् । आत्मानं प्रणंतुकामं शिववीरं समालोक्य स राघवाचार्यः सपदि गृहीत्वा स्वयं प्रणिपत्य, "रघुवीरोऽहं भवतामनुचरः" इत्यात्मानं पर्यचाययत् । तं समालिङ्ग्य अतुलितानन्दपरवशास्ते वाजिनम् आरुह्य, तेन सह प्रचलिताः । ततो दिल्लीश बाह्रिकाशोभि सैनिकाः सोऽयं सोऽयम्इति कुर्वाणाः किमिति किमिति ? पृष्टाः च दक्षकर्णस्पर्शे तान् पर्यवेष्टयन् । ततः सर्वे अन्धकारमये पथि विलीनाः ।

इति एकादशो निश्वासः ।

## 12. द्वादशनिश्वासस्य कथासारः

समयोऽयमरुणोदयस्य । पतत्त्रिणो विविधान् मनोहारिणो विरावान् प्रारभन्त । अस्मिन् समये तोरणदुर्गप्रान्ते सरोवरस्य तटे महादेव मन्दिरे सौवर्ण्या सह चारुहासिनी समालपति स्म । रघुवीर विषयकाः मोदमयालापाः तयोः विषय आसीत् । ततः चारुहासिन्यां पुष्पाण्यवचेतुं वाटिकायां प्रविष्टायां सौवर्णी वारं-वारं महादेवं प्रणमन्ती स्तुवन्ती च रघुवीरमपश्यत् । ततः परम प्रेमालापानन्तरं, महाराष्ट्रराजस्य आगमनोत्सवोऽद्य अतो महान् कार्यभारः, इत्युक्त्वा रघुवीरसिंहः तां विससर्ज । ततः सः रघुवीरः

क्रमेण, सर्वान् श्रेष्ठजनान् प्रणमन् आलिङ्गंश्च, देवशर्माणमप्युगम्य, प्राणमत् । ततो निवृत्य कुटीरे, "रघुवीरसिंहो वीरगतिं गतः" इति गतरात्रौ दृष्टेन स्वप्नेन दोद्रूयमानं, तत्रत्यैः सान्त्व्यमाना च स्वपितरं वीरेन्द्रसिंहमुपातिष्ठत । अत्रैव गणेश शास्त्री चापि समायातः । अथ गणेश शास्त्री संन्यासिवेषं विहाय पुना राजवेषं धारयितुं वीरेन्द्रसिंहं प्रैरयत् । सर्वां च सामग्रीं प्रस्तोतुं भृत्यानादिदेश । ततः एकेनाश्वारोहेण समेत्य, महाराष्ट्र राजमाता भवन्तुम् अश्रु पूर्णाभ्यां नयनाभ्यां दिदृक्षते इति रघुवीर सिंहमुद्देश्य न्यवेदि । सोऽपि पितरं पुरोहितञ्च प्रणम्य ताभ्यामनुज्ञातः प्रचलितः । तदनन्तरं एकोऽश्वारोही जयपुरात्सम्प्राप्तः । समुचिताचारा ञ्चनन्तरं वीरेन्द्रसिंह हस्ते महाराज जयसिंह-मुद्राङ्कितं पत्रमेकमर्पयत् । पत्रेऽस्मिन् अम्बराधीशेन वीरेन्द्र सिंहः समाकारितः । सुरक्षितां स्वसम्पत्तिञ्च सनाथयितुमभ्यर्थित आसीत् । ततः श्वः प्राप्तपत्रोत्तरो भवान् स्वदेशं प्रस्थास्यते । अद्यात्रैव तिष्ठतु, विश्राम्यतु च, इत्यभिधाय गणेशशास्त्री, प्रस्तुतेन व्यञ्जनेन ब्राह्मणान् भोजयितुं समुदस्थात् । अपरेद्युः महता समारोहेण महाराजो महाराष्ट्रराजः प्रतापदुर्गान्ते प्रविवेश । तदनन्तरं माल्यश्रीकादिभिः सहोपविष्टः शिववीरः क्रमेण गौरसिंहं रघुवीरसिंहञ्च, बहुशः प्रशंस्य, मण्डलेश्वरपदेनाभियोजयन् तदुपयुक्तमेकमेकं खड्गमुष्णीषञ्च समर्पयामास । ततः देवशर्मा समुपस्थितः । प्रीतो महाराष्ट्रराजः दीनारसहस्रपूर्णं पात्रमेकं तस्मै प्रायच्छत् ।

ततः देवशर्मा सौवर्णी विवाहसमय न्यवेदयत् । शिववीरेण विवाहलग्नं स्थिरीकर्तुं देवशर्मा प्रोक्तः । सः तिथिपत्रं दृष्ट्वा प्रोवाच—इतः पञ्चमेऽह्नि दिनं, लग्नञ्च शोभनम् । तथास्तु स्थिरीक्रियताम् एषैव वेला, स्वयमहमुपस्थास्ये, इति समचकथत् । ततः उदयपुराधीश-पत्रमादाय सादी समायातः । तस्मिन् पत्रे उदय पुराधीशः शिववीरस्य दिल्लीनिग्रह—विषये खेदं, यवनान् प्रति घृणाञ्च दर्शयन् शिववीरस्य यवनैः सह युद्धे साहाय्यं कर्तुं प्रत्यजानीत । अपिच खड्गसिंहपुत्रौ वीरश्यामौ, स्वसम्पत्ति ग्रहणाय प्रेषयितुमभ्यर्थयाञ्चक्रे । ततो विजयध्वज-सेनापतिः

समुपस्थाय न्यवेदयत् महाराज ! यानि दुर्गाणि, अस्माभिः सन्धिबन्धनाय दिल्लीश्वरस्य हस्ते अर्पितानि-आसन् तानि सर्वाणि प्रत्याहृतानि ।

अद्य प्रातरेव श्रीचरणानां वशंवदानि संवृत्तानि । सर्वे जय-जय ध्वनिना प्रासादमध्वनयन् । महाराजः सुवर्णकंकणयुगलमस्मै व्यततरत् । ततः कबिकुलभूषणाय भूषणाय, भूस्वामिताधिकारपत्रमदात् । ततो गौरसिंह-श्यामसिंहौ गार्हस्थ्ये प्रवेष्टुं प्रैरयत् । ततः जाते भोजनसमये सर्वेऽपि समुत्तस्थुः ।

अथ पंचमेऽह्नि कुमार रामसिंहस्य (रघुवीरसिंहस्य) विवाहो जातः । अथ एकदा महाराष्ट्रराजः स्वप्ने चेखिद्यमानं अवरंगजीवं तथा निजकरेण आत्महत्यां कुर्वन्तीं रसनारीं समपश्यत् ।

ततो द्वितीय स्वप्ने महाराष्ट्रराजः महाराज जयसिंह चरमं निश्वसन्तमपश्यत् । भगवन्नामानि स्मरन् कथं कथमपि शान्तिमवाप । ततः शिववीरः अष्टोत्तरकृत्वः सुवर्णेनात्मानं सन्तोल्य द्विजेभ्यो व्यतरत् । अस्मिन्नेव समये विजयध्वजेन सेनापतिना यवनैः सह युद्धे स्वविजयः संसूचितः । सर्वे जयजयध्वनिमकार्षुः ।

अथ स एव योगिराजः समाधित उत्थाय बहिरागत्य, गिरि शिखरे स्थित्वा परितो महाराष्ट्र राजस्य प्रतापं विलोक्य सम्प्रसीदन् "यतो धर्मः ततो जयः" इति पठन् पुनः समाधौ तस्थौ ।

इति द्वादशो निश्वासः ।

———

# व्याख्या-भाग

## प्रथमो निश्वासः

पृष्ठ :—1—**विष्णोर्मायेति**——

विष्णोः माया भगवती यया जगत् सम्मोहितम् इत्यन्वयः ।

**व्याख्या**—विष्णोः = लक्ष्मीपतेः, माया = लीला, भगवती = अनैकैश्वर्यगुणोपेता, (अस्ति) यया = मायया, प्रस्तुतया जगत् = संसारः, सम्मोहितम् = अज्ञाने पातितम् ।

**भावार्थ** :— विष्णोर्मायात्मिका शक्तिः सर्वानतिशय्य वर्तते यतः आकीटादेव सर्वोऽपि संसारः क्रोधेर्ष्यादिभिः तस्याः गुणैः गुणैरिव बद्धः यथेच्छं परिभ्राम्यते । अनेन भागवतपद्येन अस्य शिवराजविजय-ग्रन्थस्य कथावस्तु संक्षिप्य सूचयति काव्यकारः ।

**पृष्ठ, 2.—हिंस्रः इत्यादि** =

हिंस्रः खलः स्वपापेन विहिंसितः साधुःसमत्वेन भयात् विमुच्यते, इत्यन्वयः ।

**व्याख्या**—हिंस्रः = हिंसाशीलः, खलः = दुष्टः; स्वपापेन = स्वकृतेन दुष्टकर्मणा, विहिंसितः = विनाशितो भवति, साधुः = सज्जनः, समत्वेन = समदृष्ट्या = (ईर्ष्याद्वेषादि राहित्येन) भयात् = भीतेः, विमुच्यते = विमुक्तो भवति ।

**भावार्थ** :—दुर्जनस्य पापमेव तस्य विनाश-कारणं भवति । वीतरागः पुरुषः शुभैः स्वकर्मभिः परित्रातः सुखमश्नुते । तथाचात्र प्रथम निश्वासे दुष्ट-यवन-युवकः कन्यामेकामपहृतवान्, विनष्टश्च । सा कन्या दैवेन परिरक्षिता सुखोन्नतिं ययौ ।

**पृष्ठ :—6. कदली दल——पर्वत खण्ड आसीत् ।**

**सन्दर्भ** :—कविः कुटीरं परिचाययति । परितः शोभाञ्च वर्णयति ।

**व्याख्या**—कदल्याः = रम्भायाः, दलानाम् = पत्राणाम्, कुञ्ज इव =

निकुञ्ज इव, तथोक्तस्य, कदली दल कुञ्जायितस्य, एतस्य = पूर्वोक्तस्य, कुटीरस्य = पर्णकुट्याः, परितः = समन्तात्, पुष्प वाटिका पुष्पोद्यानम्, पूर्वतः = प्राच्यां दिशि, परमम् = अतिशय पवित्रम्, शुचिः, पानीयं पेयं जलं = सलिलं, यस्मिन् तम्, परः सहस्राणाम् सहस्राधिकानाम्, पुण्डरीकानाम् कमलानां, पटलैः = समूहैः, परिलसितम् = सुशोभितम्, पतत्त्रिणाम् = विहगानाम्, कुलस्य समूहस्य, कूजितेन, कलरवेण, पूजितम् अभिनन्दितम्, पयसां = जलानां, पूरेण = प्रवाहेण, पूरितम् = भरितम्, सरः = सरोवरः (आसीत्) दक्षिणतः = दक्षिणस्यां दिशि, एकस्य निर्झरस्य, = जल प्रवाहस्य, झरझर ध्वनिका = झरझर शब्देन, ध्वनितानि = मुखरितानि, दिगन्तराणि = दिग्भागाः येन सः = तथोक्तः, फलपटलस्य = फलनिकरस्य, आस्वादेन = रसनेन, चपलिताः = चञ्चलाः, चञ्चवः = तुण्डगतिः येषां तथाभूतानां, पतङ्गानाम् = विहङ्गमानां, कुलस्य = गणस्य, आक्रमणेन = आक्रान्त्या, अधिकम् = बहुतरम्, विनताः = विनम्राः, शाखाः = स्कन्धाः, येषां तथोक्तानां शाखिनां = वृक्षाणाम्, समूहेन = सन्दोहेन, व्याप्तः = आचितः, सुन्दर कन्दरः = रमणीय गह्वरः, पर्वतखण्डः = गिरिप्रदेशः आसीत् ।

गद्येऽस्मिन् धर्मलुप्तोपमाऽलंकारः ।

**पृष्ठः—13. भगवन् श्रूयताम्—यदि कुतुहलम् इत्यादि—**

**सन्दर्भ**—क्रन्दन शब्दं श्रुत्वा कुतः सकरुणरोदनम् ? केयं रुदिति, इति योगिराजस्य कुतूहलं दृष्ट्वा ब्रह्मचारि गुरुः निवेदयति भगवन् श्रूयतामित्यादि ।

**व्याख्या**—भगवन् = श्रीमान्, श्रूयताम् = आकर्ण्यताम्, यदि = चेत् कुतुहलम् = औत्कण्ठ्यम्, (अस्ति) ह्यः = गतदिवसे, सम्पादितम् = विहितम्, सायन्तनम् = सन्ध्याकालीनं, कृत्यम् = कर्म येन तथोक्ते, अत्रैव = अस्मिन्नेव स्थाने कुशास्तरणम् = कुशासनम्, अधिष्ठिते = अध्यासीने, मयि = ब्रह्मचारि गुरौ, परितः = समन्तात् समासीनेषु = समुपविष्टेषु छात्रवर्गेषु = विद्यार्थि-समूहेषु, धीरस्य = मन्दस्य, समीरस्य = अनिलस्य, स्पर्शेन = सम्पर्केण, मन्द-मन्दं = शनैः शनैः, आन्दोल्यमानासु = संचाल्य-

मानासु, व्रततिषु=लतासु, यामिनी=रात्रिः, एव कामिनी=रमणी, तस्याः चन्दनबिन्दौ इव चन्दन-तिलके इव, इन्दौ=चन्द्रे, समुदिते= लब्धोदये सति, गगने=आकाशे कौमुदीकपटेन=चन्द्रिकाच्छलेन, सुधा-धाराम् इव=पीयूष-प्रवाहम् इव, वर्षति सति अस्मत् नीतिवार्त्ताम्= अस्मत् गोष्ठीं, शुश्रूषुः=श्रोतुमिच्छुषुः, पतंगकुलेषु=विहंगम समुदायेषु, मौनमाकलयत्सु=तूष्णीं तिष्ठत्सु, चञ्चरीकेषु=भ्रमरेषु, कैरवाणाम्= कुमुदानां विकासेन=प्रस्फुटितेन, यो हर्षप्रकाशः=आनन्दस्य समुद्भूतिः, तेन मुखरेषु=सशब्देषु, अस्पष्टानि-अव्यक्तानि, अक्षराणि=वर्णाः, यस्मिन् तत्, श्लथत्कण्ठम्=सगद्गद गलम्, घर्घरित स्वनम्=घर्घर विकृतिमत्स्वरम्, चीत्कारमात्रम्=चीत्कारमयम्, दीनतामयम्=दैन्यपूर्णम्, अत्यवधानेन=महतावधानेन, श्रव्यत्वात्=श्रोतुं शक्यत्वात्, अनुमिता= तर्किता, दविष्ठता=दूर देशत्वम् यस्य तत्-क्रन्दनन्=रोदनम्, अश्रौषम् =आकर्णयम्।

अत्र गद्ये—उत्प्रेक्षालंकारः

पृष्ठः—20-21 भगवन् बद्धसिद्धासनैरित्यादि।

सन्दर्भ :—योगिराजस्य वचनं यत् ह्यः एव वीर विक्रमादित्यः पर्वतीयान् 'शकान् विजित्य स्व राजधानीमायातः तर्हि कथं वर्षाणां सप्तदश शतकानि व्यतीतानि ? इति श्रुत्वा ब्रह्मचारि गुरुः तमुत्तरति भग-वन्-इति।

व्याख्या :—भगवन्=पूज्यचरण ! बद्धं सिद्धासनं यैः बद्ध-सिद्धासनैः=सिद्धासनोपविष्टैः, निरुद्धः=नियन्त्रितः, निश्वासः=मुखवायुः यैः तैः निरुद्धनिश्वासैः=संयत प्राणैः, प्रबोधिता=जागरिता, कुण्डलिनी योगशास्त्र प्रसिद्धा नाडिका यैः तैः, विजितानि=वशीकृतानि, दशेन्द्रियाणि =पञ्च कर्मेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि, यैः तथोक्तैः। अनाहतश्चासौ नादः तस्य अनाहत नादस्य=हृदय-प्रदेशे विनिःसृतस्य ध्वनेः तन्तुं= सूत्रम्, अवलम्ब्य=समाधित्वं, आज्ञाचक्रम्=भ्रुवोर्मध्यस्थं योग-शास्त्रीय षट् चक्रान्यतमम्; संस्पृश्य प्राप्य, चन्द्रमण्डलं=शून्यचक्रं, तस्य अन्तः=

मध्ये प्रविश्य गत्वा, परमात्मानम् = ईश्वरं, साक्षात् कृत्य = प्रत्यक्षं विधाय, तत्रैव = परमात्मनि, रममाणैः = विहरद्भिः, मृत्युञ्जयैः = जितमरणैः, आनन्दमात्रस्वरूपैः = केवलानन्दरूपैः ध्यानावस्थितैः = समाधिस्थैः, भवादृशैः = त्वत् सदृशैः, कलवेशः = समयवेगः न ज्ञायते = नावबुध्यते ।

अत्रगद्ये — काव्यलिंगालंकारः ।

पृष्ठ — 24. मुने ! विलक्षणोऽयं भगवान्-इत्यादि —

सन्दर्भ :— भारतवर्षदशां स्मरणेन विमनायमानं ब्रह्मचारि गुरुम् विलोक्य, योगिराजः तं शास्त्रीयोपदेशेन सान्त्वयन् कथयति — मुने ! इत्यादि ।

व्याख्या :— मुने ! ऋषे ! अयम् = एषः, सकलानां = समस्तानां, कलानां = विधानां, यः कलापः तस्य कलापस्य समूहस्य कलनः = निर्माता, सकल कालनः = सर्वनाशकः विश्वनियन्ता, करालः = भीषणः, कालः = कालरूपः एष भगवान् = ईश्वरः, विलक्षणः = विचित्रः, (अस्ति) स एव = काल स्वरूपः भगवान् एव कदाचित् पयः पूरेण = जल-प्रवाहेण पूरितानि = भरितानि, अकूपारतलानि = समुद्रतलानि, भल्लूकानां = मरुस्थलानि विधत्ते, सिंहानाम् = व्याघ्रानां, भल्लूकानां = ऋक्षाणाम्, गण्डकानाम् = खड्गिनाम्, फेरूणाम् = शृगालानाम्, शशानाञ्च, सहस्रैः = सहस्र संख्याभिः व्याप्तानि परिगतानि, अरण्यानि = वनानि, जनपदीकरोति = जन सम्पदाकुलानि — नगराणि करोति । मन्दिराणि = देवालयान् प्रासादान् = राजभवनानि, हर्म्याणि = धनिक गृहाणि, शृङ्गाटकानि = चतुष्पथानि, चत्वराणि अङ्गणानि, उद्यानानि = उपवनानि, तडागान् = सरांसि, गोष्ठानि = गोस्थानकानि, तन्मयानि = तत्स्वरूपाणि, नगराणि = पुराणि च, न काननं अकाननम्, तानि-अकाननानि-च काननीकरोति = अरण्य-तुल्यानि करोति ।

अत्र गद्ये — अनुप्रासोऽलंकारः ।

पृष्ठ 30. ततो दिल्लीश्वर — इत्यादि ।

सन्दर्भ — भारत वर्षस्य दशा वर्णनानन्तरं ब्रह्मचारि गुरुः योगिराजं

निवेदयति यत् शहाबुद्दीन नामा यवनशासकः केन प्रकारेण भारते निज राज्यं विस्तारयमास ।

**व्याख्या**—ततः = तदनन्तरं दिल्याक्रमणानन्तरम् इन्द्रप्रस्थाधिपम्, पृथ्वीराजम् = एतन्नामकं राजानं, कान्यकुब्जेश्वरम् = कन्नौजाधिपम्, जयचन्द्रम् = एतत्संज्ञकभूपतिं, पारस्परिकविरोधः = अन्योन्यान्तरिक-विद्वेषः, एव ज्वरः = तापः तेन ग्रस्तम् = आक्रान्तम् विस्मृतराजनीतिं = विस्मृता राजनीतिः येन, तम् विस्मृतराजनीतिम् = राजनीतिच्युतम्, भारतवर्षस्य = आर्यावर्तस्य, दुर्भाग्यमिवाचरन्तमिति भारतवर्ष दुर्भाग्याय-माणम् = भारतदुर्भाग्यभूतम् आकलय्य = ज्ञात्वा, उभावपि = द्वावपि, विशस्य = हत्वा, अनायासेन = अपरिश्रमेण वाराणसी पर्यन्तम् = काशीं यावत्, अखण्डमण्डलम्, महारत्नमिव, महामणिमिव, महाराज्यम् = महाशासनम् अंगीचकार = आत्मसात् कृतवान् । तेन = शहाबुद्दीनेन वारा-णस्यामपि = काश्यामपि बहवः अनेके, अस्थिगिरयः = अस्थिपर्वताः, प्रचिताः = रचिताः । रिङ्गन्तः = चलन्तः, तरंगभङ्गुराः = वीचि भेदाः, यस्याः सा, गङ्गापि = भागीरथ्यपि, शोणितशोणा = रक्तेन शोणा = रक्त वर्णा, शोणीकृता—रक्तवर्णीकृता- परःसहस्राणि = सहस्राधिकानि, देवमन्दि-राणि = देवालयानि, भूमिसात्कृतानि—भ्रंशितानि ।

अत्र पृथ्वीराज जयचन्द्रयोः भारतदुर्भाग्येन अकण्टकस्य च महाराज्यस्य अकीटकिट्टं, महारत्नेन सह-उपमानात् उपमालंकारः ।

**पृष्ठ—37. मुनिवेषोऽपि किञ्चित्कोपकषायितनयनः इत्यादि**

**सन्दर्भः**—चिरं सावधानतया चरणक्षेपशब्दस्य कारणं न पश्यन् गौरसिंहः खड्गमादाय कम्पमानस्य कदलीवृक्षस्य निकटे समागत्य यवन युवकमपश्यत् । तत्र समागच्छन् गौरः कीदृशः भाति-इति सालंकारं वर्णयति कविः मुनिवेषोऽपि इत्यादि ।

**व्याख्या**—मुनिवेषोऽपि = वेषेण मुनिरपि, किञ्चित् = ईषत् कोपेन = क्रोधेन, कषायिते—रक्ते, नयने = नेत्रे यस्य सः करे = पाणौ,

कलितः=धारितः, कृपाकृपणः=दयाशून्यः कृपाणः=चन्द्रहासः येन, सः, महादेवम् पशुपतिं, आरिराधयिषुः=आराधयितुमिच्छुः, तपस्विवेषः=धारित तपस्वि नियमः, अर्जुनः=पार्थ एव, शान्तः=शमस्थायिभावो रसः, वीरः=उत्साह स्थायिभावो रसः, तौ शान्तवीररसौ, तयोः द्वयेन=युग्मेन, स्नातः=आप्लावितः, सपदि=शीघ्रमेव सन्निकटे=तस्य कदली वृक्षस्य समीपे, समागतवान्=प्राप्तवान्. लताप्रतानः=बल्ली सन्तानः एव वितानः=विस्तारः तेन लता प्रतान वितानेन=बल्ली समूह विस्तारेण, वेष्टितस्य=आच्छादितस्य रम्भास्तम्भानाम्=कदली स्कम्भानाम्, विषयस्य=विसंख्यकस्य मध्ये नीलेन=श्यामलेन, वस्त्रखण्डेन=पटशकलेन, वेष्टितः=बद्धः, मूर्धा=शिरो यस्य तम्, हरितम्=श्यामलम्, कञ्चुकम्=निचोलः, यस्य तम्, श्यामेन सितेतरेण, वसनेन=वाससा, आनद्धम्=प्रतिबद्धम्, अधोवसनम्=अधोवस्त्रम्, येन, तम् काकासनम्=चिवुकार्पित जानु युगलम्, तेन उपविष्टम्=निषण्णम्, रम्भायाः=कदल्याः, आलवाले=आवापे, लग्नम्=संसक्तम्, मुखं=वदनं यस्य तम्, शिथिलम्, हस्तयुगलम्=करयुगलम् यस्य तम्, लशुनस्य गन्ध इव गन्धो येषां तैः लशुनगन्धिभिः=अतिदुर्गन्धिभिः, निश्वासैः=मुखवायुभिः, कदलीकिसलयानि=रम्भापल्लवान्, नवाङ्कुरितायाः=नूतनप्रस्फुटितायाः, श्मश्रुश्रेण्याः, च्छलेन=श्मश्रु कपटेन, कन्यकायाः=बालिकायाः, अपहरणरूपं यत् पङ्कम्=पापम् तस्य कन्यापहरणे यः कलङ्कः दुर्यशः स एव पङ्कः=कर्दमः, तेन कलङ्कितम्=चिह्नितम्, भ्रष्टम् आननं मुखं यस्य तम्, यवनयुवकं=म्लेच्छं, विंशतिवर्षकल्पम्=विंशतिवर्षदेशीयम् तरुणम् गौरसिंहः अपश्यत्=दृष्टवान् ।

**पृष्ठ 42. अथ मुनिरपि—**

**सन्दर्भ :**—गौरसिंहेन यवन-शिरविच्छेदानन्तरं मुनिः समोदं—आलिङ्गनं कीदृक्करोतीति वर्णितमत्र ।

अथ=यवन-शिर-कर्तनानन्तरम्, मुनिरपि=ब्रह्मचारी गुरुरपि, दाडिम-कुसुमास्तरणाच्छन्नायामिव=दाडिमस्य=करकस्य, कुसुमानाम्=

पुष्पानाम्, आस्तरणेन = विष्टरेण, युक्तायामिव, गाढ़रुधिरदिग्धायाम् = गाढरक्तप्रसिक्तायाम्, ज्वलदङ्गारचितायाम् = ज्वलत्फुलिङ्गव्याप्तायां, चितायाम् = चितौ, इव वसुधायाम् = वसुन्धरायाम्, शयानम् = लुण्ठन्, वियुज्यमानभारतभुवमालिङ्गन्तम् = वियुज्यमान भारत वसुन्धरम् संश्लिष्टम्, इव निर्जीवी भवताम् = निष्प्राणतां गच्छताम्,अङ्गवन्धनानाम् = शरीर सन्धीनाम्, चालने, परम् = निरतम्, शोणितसंघातव्याजेन = रुधिर प्रवाह च्छलेन, अन्तस्थितरजोराशिमिव = अन्तस्थित रजोगुण समूहमिव, उद्गिरन्तम् = बमन्तम्, कलितसामन्तन घनाडम्बरविभ्रमम् = धारित-सांयकालिकमेघविडम्वनविलासम्, सततताम्रचूडभक्षणपातकेन = निरन्तर कुक्कुटाशन पापेनेव, ताम्रीकृतम् = रक्तीभूतम्, छिन्न कन्धरम् = कृत्तग्रीवम्, यवन हतकम् = म्लेच्छपापिनम् (युवकम्) अवलोक्य = विलोक्य, सहर्षम् = सप्रसन्नम्,ससाधुवादम् = प्रशंसा सहितम्, सरोमोद्गमञ्च = रोमाञ्चयुक्तम्, गौरसिंहम् = तद्ब्रह्मचारिणम्, आश्लिष्य = आलिङ्ग, भ्रूभङ्गमात्राज्ञप्तेन = नेत्रसंकोच संकेतितेन, मृतककञ्चुक कटिबन्धोष्णादिकम् = यवनयुवक कञ्चुक जनघनपट्टिकोष्णीषादिकम्, अन्विष्य = अन्वेषणं विधाय, आनीतम् = प्रस्तुतम् एकं पत्रम् = लेखनमेकम्, आदाय = गृहीत्वा सगणः = परिजन सहितः, स्वकुटीरम् = निजोटजम्, प्रविवेश = प्रवेशयामास ।

अलंकारः—उत्प्रेक्षा विशेषतः ।

## अथ द्वितीयो निश्वासः

1. पृष्ठ—(44) 'रात्रिर्गमिष्यति भविष्यति सुप्र—

सन्दर्भ—कविः द्वितीय निश्वास कथाम् अनेन-पद्येन संकेतयति रात्रिर्गमिष्यतीत्यादि—

व्याख्या—रात्रि गमिष्यति सुप्रभातम् भविष्यति भास्वांन् उदेष्यति, पङ्कजश्रीः हसिष्यति कोशगते द्विरेफे इत्थम् विचिन्तयति हा हन्त गजः नलिनीम् उज्जहार । इत्यन्वयः ।

रात्रिः = निशा, गमिष्यति = व्यत्येष्यति, सुप्रभातम् = शोभनं

प्रातः, भविष्यति = भविता, भास्वान् = सूर्यः, उदेष्यति = उदयं गमिष्यति पङ्कजश्रीः = कमलसुषमा, हसिष्यति, (तदाहम् अस्याः नलिन्याः बहिर्गमिष्यामि) कोशे = कमलान्तर्गते, गते = प्राप्ते, द्विरेफे = भ्रमरे इत्थम् अनेन प्रकारेण विचिन्तयति = विचारयति, (सति) हा हन्त = हा कष्टं, गजः = हस्ती, नलिनीम् = कमलिनीम्, उज्जहार = उन्मूलयाम्बभूव ।

**भावार्थ**—शिववीरं निग्रहीतुं जयं विजयं, यशश्च लब्धुं, शतश उपायानाश्रयन्, विविधान् मनोरथान् च कुर्वन् अपजलखानः स्वयमेव सहसा हृतः । इत्थं भ्रमरवृत्तान्तेन रूपकेण सव्यङ्ग्यं सूचयति कविः ।

**अत्र पद्ये अप्रस्तुतप्रशंसालंकारः ।**

**2. पृष्ठ (47) अथ जगतः प्रभाजालमाकृष्य——चक्षुषामगोचर इव संजातः ।**

**सन्दर्भः**—अथ द्वितीयनिश्वासे, कवि र्वर्णयति यत् यवनग्रस्तमिव, भारतं, ज्ञात्वा भगवान् सूर्यः जगत् अन्धकारे पातयत् सायंकाले चक्षुषामगोचरः जातः ।

**व्याख्या**—अथ = तदनन्तरम्, जगतः = संसारात्, प्रभाजालम् = रश्मिसमूहम्, आकृष्य = संकोच्य, कमलानि = पद्मानि, सम्मुद्र्य = मुद्रयित्वा, कोकान् = चक्रवाकान्-सशोकीकृत्य = दुःखिनो विधाय, सकलस्य = सम्पूर्णस्य, चराचरस्य = संसारस्य, चक्षुषः = नेत्रस्य, संचार-शक्तिम् = अवलोकनसामर्थ्यम्, शिथिलीकृत्य = मन्दीकृत्य, निजमण्डलेन = निजबिम्बेन, कुण्डलेनेव = कर्णावतंसेनेव, पश्चिमाम् = वरुणसम्बन्धिनीम्, आशाम् = दिशाम्, भूषयन् = अलङ्कुर्वन्, वारुणी सेवनेनेव = मदिरापानेनेव, माञ्जिष्ठेन = मंजिष्ठावर्णेन, मञ्जिम्ना = रक्तवर्णेन, रञ्जितः = रक्तीभूतः अनवरतम् = सततम्, भ्रमणेन = पर्यटनेन, श्रान्तः = खिन्नः, सुषुप्सुः = स्वप्तुमिच्छुः, इव = यथा म्लेच्छगणस्य = नीचयवनसमूहस्य, दुराचार-दुःखेन = अत्याचारव्यथया, आक्रान्तायाः = संकुलायाः, वसुमत्याः = वसुन्धरायाः, वेदनाम् = पीडाम् इव, समुद्र-शायिनी = विष्णौ, निविवेदयिषुः = निवेदयितुमिच्छुः, वैदिकधर्मस्य = सनातनधर्मस्य, ध्वंसदर्शनेन =

विनाशावलोकनेन, संजात; = उत्पन्नः निर्वेदः—वैराग्यः यस्य सः तथोक्तः, गिरिगहनेषु = पर्वतगुहासु, प्रविश्य = प्रवेशं विधाय, तपश्चिकीर्षुः = तप्तुमिच्छुः इव, घर्मापायेन = उष्णतेजसा, तप्तः = संजाततापः। सिस्नासुः—स्नातुमिच्छुः, सायं समयम् = सन्ध्याकालम्, अवगत्य = ज्ञात्वा, सन्ध्योपासनमिव = सान्ध्यविधिमिव, विधित्सुः कर्तुमिच्छुः, = मम वंशे, कोऽपि = कश्चिदपि नास्ति, यः धर्मध्वंसिनः = धर्म नाशकान्, यवनहतकात् = म्लेच्छान्, सकण्ठग्रहम् = कण्ठे गृहीत्वा, अस्मात् याज्ञियात् = यजनशीलात् भारतगर्भात् = भारतात् अपसारयेत् = बहिःकुर्यात्। इति = एवं, चिन्ताक्रान्त इव, कन्दरिकन्दरेषु = पर्वत गुहासु, प्रविविक्षुः = प्रवेष्टुमिच्छुः भास्वान् = भगवान् सूर्यः, क्रमशः, क्रमेण, क्रूर करान् आहृत्य = अपसार्य, दृश्यपूर्णम् = अवलोकनक्षमम् = बिम्बम्, संवृत्य = भूत्वा, श्वेतीभूय = श्वेत्यमाश्रित्य, पीतोभूय = पीतिमानं लब्ध्वा, रक्तीभूय = लोहितो भूत्वा, च गगन-धरातलाभ्याम् = द्यावापृथिवीभ्याम्, आक्रम्यमाण इव = आक्रमितु-मिच्छुरिव, अण्डाकृति = अण्डाकारम्, अंगीकृत्य = स्वीकृत्य, कलिना = कलियुगेन, कौतुकात् = हेलया, कवलीकृतम् = भक्षितम्, सदाचारस्य = सद्व्यवहारस्य, प्रचारम्, पातकपुञ्जेन = पापसमूहेन, पिञ्जरितम् = कलुषितम्, धर्मस्य = सनातनधर्मस्य, यवनगणेन = म्लेच्छसमूहेन, ग्रस्तम् = पीडितम्, भारतवर्षं = भारतदेशं, स्मारयन् = स्मरण पथमानयन्, जगत् = भुवनम् च, अन्धतमसे = घनान्धकारे, पातयन् = अर्पयन्, चक्षुषाम् = नेत्राणाम्, अगोचरः = अविषयः, संजातः = संवृत्तः इति।

अत्र गद्ये-विशेषतः उत्प्रेक्षालंकृतिः।

पृष्ठ (60) परितश्च तस्यैव खर्वामपि इत्यादि।

सन्दर्भ—गौरसिंहः सन्यासिवेषम् आकलय्य, शत्रु-गृहस्य गूढतमं वृत्तान्तं ज्ञात्वा प्रहरिणञ्च परीक्ष्य, शिववीरस्य समीपं प्राप। यदा गौरः शिवस्य समीपं गतवान् तदा शिववीरः सन्ध्यामुपास्यमान आसीत्। तस्य मित्राणि च सर्वतः उपविष्टानि आसन्। गौरः तत्र गत्वा दृष्ट्वान् यत् परित-

तस्यैव इत्यादि ।

**व्याख्या**—परितः = समन्ततः, तस्यैव = शिववीरस्य, वयस्याः = मित्राणि, (कटानध्यवस्यन्निति दूरेण सम्बन्धः) खर्वामपि = ह्रस्वामपि, अखर्वः = अनल्पः पराक्रमो यस्याः ताम्, अखर्वः पराक्रमो यस्यामिति विग्रहे कृते यः खर्वः तस्मिन् अखर्वः पराक्रमः कुतः इति विरोध इव आभासते, परिहारस्तु पूर्वं विग्रहेण जातः. श्यामामपि = कृष्णामपि, यशः समूहेन = कीर्ति-कूटेन, श्वेतीकृताम् = धवलीकृताम् त्रिभुवनं = त्रिलोकं यथा ताम्, कुशासनाश्रयामपि = कुशासनाश्रयाम्, कुत्सितम् = निन्दितम् शासनम् आश्रयः = आधारो यस्यास्ताम् या कुशासनाश्रया सा कथं सुशासनाश्रयेति विरोधः । परिहारस्तु कुशासनाश्रयाम् = कुशासनोपविष्टामपि सुशासना-श्रयाम्, पठनपाठनादेः = अध्ययनाध्यापनादेः, परिश्रमस्य = आयासस्य, अनभिज्ञाम् = अपरिचिताम् अपि नीतिनिष्णाताम् = नयपारं-गमाम्, यया अपारमपि नाधीतम् सा कथं नीतिनिष्णातेति विरोधः, परमनेके रणजीत सिंहादयः इतिहासप्रसिद्धाः परिहरन्ति विरोधमिमम् । स्थूले = विशाले, दर्शने = चक्षुषी, यस्याः तामपि सूक्ष्मे = ह्रस्वे, दर्शने = नेत्रे यस्याः ताम् या खलु स्थूलदर्शना सा कथं सूक्ष्मदर्शनेति विरोधः । परिहारस्तु सूक्ष्मम् = गूढ रहस्यम् तदालोकन समर्थम् दर्शनं दृष्टिः बुद्धिर्वा यस्यास्ताम् । हत्याकाण्डस्य = हिंसायाः व्यसनिनीम् = प्रियामपि धर्मधौरेयीम् = धर्ममार्गाग्रेसराम्, (या हत्याकाण्ड व्यसनिनी सा कथं धर्मधौरेयेति विरोधः (आततायिनमायान्तं हन्यादेवाविचारयन्) इत्यादि धर्मशास्त्रवचनैः अहिंसामूलस्य अपि धर्मस्य अखण्डितत्वेन सिद्धि एव । कठिनामपि = कर्कशाम्, कोमलाम् = सुकुमाराम्, या कठिना सैव कोमला इति विरोधः परिहारस्तु शरीरेण कठिना हृदयेन कोमलेति । उग्रामपि = भयङ्करामपि, शान्ताम् = सौम्याम् = या उग्रा सा कथं शान्तेति । विरोधः । परिहारस्तु ग्रहीतृणां भेदेन, यवनानां कृते उग्राम्, सुहृदां कृते-शान्ताम् शोभितः = सुन्दरः, विग्रहः = सग्रामो यस्याः तामपि-दृढः = स्थिरः सन्धिबन्धः = सन्धि प्रस्तावो यस्या स्ताम् । या शोभितविग्रहा, सा कथं दृढसन्धिबन्धेति विरोधः । परिहारस्तु शोभितः = राजितः विग्रहः = शरीरावयवो यस्य तामपि ।

दृढ़सन्धिबन्धाम् । कलितम् = धारितं, गौरवम् = गुरुत्वम् यया तामपि कलितं = धारितम् । लाघवं = लघुत्वम् यया ताम् । यः गुरुः सः कथं लघुः इति विरोधः, परिहारस्तु = आत्मना गुरुः वपुषा च लघुः । विशालललाटाम् = विशालः = प्रशस्तःललाटः मस्तकःयस्यास्ताम्, प्रचण्ड बाहुदण्डाम् = प्रबल-भुजदण्डाम्, शोणापाङ्गाम् = रक्तनेत्र प्रान्ताम्, कम्बुग्रीवाम् = शङ्खतुल्य कन्धराम्, सुनद्धस्नायुम् = अशिथिल स्नायु-परिलसिताम्, वर्तुलम् = गोलाकारम्, श्यामम् = कृष्णम्, श्मश्रु = उत्तरोष्ठ रोमराजिः यस्यास्ताम्, धारिताकृतिमिव = धृताकारामिव वीरताम्, = धैर्यम्, समासादिता, = समुपलब्धा, समरे = संग्रामे, स्फूर्तिः = चाञ्चल्यम् यया ताम्, मूर्तिम् = प्रतिमाम्, दर्श-दर्श = पुनः पुनरालोक्य, परम् = उत्कृष्टम्, प्रसादम् = हर्षम्, आसादवन्तः = प्राप्तवन्तः, कटान् = आसनविशेषान्, अध्यवसन् = अध्यासीनाः अतिष्ठन् ।

अत्र गद्ये विरोधाभासालंकारः ।

कुत्रचित् उत्प्रेक्षा च ।

पृष्ठ—64. भगवन् सर्वं सुसिद्धम् इत्यादि ।

सन्दर्भ—शिववीरेण कथ्यतां को वृत्तान्तः ? का च व्यवस्था ? अस्मन्महाव्रताश्रम परम्परायाः" पृष्टो गौरसिंहः महाव्रताश्रम परम्परायाः कार्यविधिं कथयति—भगवन् सर्वं सुसिद्धमिति ।

व्याख्या—भगवन् = श्रीमन्, सर्वं = निखिलम्, सुसिद्धम् = कुशलम् प्रतिगव्यूत्यन्तराले = प्रतिद्विक्रोशान्तर्गते अंगीकृत सनातनम् धर्मस्य = वैदिक धर्मस्य, रक्षायाः = रक्षणस्य महाव्रतं = महान् नियमः यैः तेषाम् स्वीकृत मुनिवेषधारिणाम्, वीरवराणाम् = प्रमुखवीराणाम् आश्रमाः = निवास-स्थानानि सन्ति । प्रत्याश्रमञ्च = प्रतिकुटीरेषु, वलीकेषु = क्षत्ररन्ध्रेषु, गोपायित्वा गोपनपूर्वकं स्थापिताः = निहिताः परःशता; खड्गाः—असयः, पटलेषु = शस्त्रान्तरगतेषु, तिरोभाविताः = अन्तर्निहताः, शक्तयः = अस्त्र विशेषः । कुशपुञ्जान्तः = दर्भसमूहेषु, स्थापिताः = सुरक्षिताः भुशुण्ड्यश्च = नलिकास्त्राणि च समुल्लसन्ति = विद्यन्ते ।

उञ्छस्य = पतितस्य, अन्नकणाग्रहणस्य, शिलस्य = कणिशाद्यर्जनस्य, समिदाहरणस्य = काष्ठानयनस्य, इङ्गुदोपर्यन्वेषणस्य = पिण्याकान्वेषणस्य, भूर्जपत्रपरिमार्गणस्य = भूर्जपत्रान्वेषणस्य, कुसुमावचयनस्य = पुष्पाबचयनस्य; तीर्थाटनस्य = तीर्थभ्रमणस्य, सत्सङ्गस्य, सज्जनोपदेशग्रहणस्य, व्याजेन = च्छलेन, केचन जटिला: = जटाधारिण:, परे = अन्ये, मुण्डिन: = कचरहिता:, इतरे = तदितरे, कषायिण: = गैरिकवसना:, अन्ये मौनिन: = मौनधारिण:; बहव: = असंख्या:, पटव: = कुशला:, बटवश्चरा: = ब्रह्मचारिण:, संञ्चरन्ति = भ्रमन्ति ।

पृष्ठ—82. तानरङ्गस्तु—

**व्याख्या**—तानरङ्गस्तु = तानरंग = तानरंगरूपेण गौरसिंह:, तानपूरिकाहस्तेन = गृहीततान पूरिकेण, तेनैव = पूर्वं प्रतिपादितेनैव, बालकेन = वालेन, अनुगम्यमान: = अनुसृत:, शनै: शनै: = क्रमश:, प्रविश्य = प्रवेशं कृत्वा, प्रथमत: तृतीय पर्यन्तं द्वारं अतिक्रम्य = अतिक्रमणं विधाय, काश्चित्. मृदङ्गस्वरान्, सन्दधत: = सन्दधानं विदधत:, काश्चिद् वीणावरणं = वीणाच्छादनम्, उन्मुच्य = अपहाय, प्रवालं = वीणादण्डम्, प्रोञ्छ्य = निर्मली विधाय, कोणम् = वादनोपयोगी उपकरण विशेषम् । कलयत: = संदधत:, कांश्चिद् । अविचलोऽयम् = स्थिरोऽयम् । एतेनैव = अनेनैव सह = समम्, योज्यन्ताम् = सम्मेलय, अपरवाद्यान् = अन्यवाद्यान् इति. वंशीरवम् = वशी ध्वनिम्, साक्षीकुर्वत: = दृष्टिपथं नयत:, कांश्चित्, कलितनेपथ्यान् = धारित वेषान्, पादयो: = चरणयो:, नूपुरम् = पादाभरणम्, बध्नत: = धारयत:, कांश्चित्, स्कन्धावलम्बिगुटिकात: = अंसावलम्बितझोलिकात:, करतालिकाम् = वाद्य विशेषम्, उत्तोलयत, कांश्चित्, कर्णे = श्रोत्रे, दक्षकरम् = अवामहस्तम्, निधाय = निक्षिप्य, चक्षुषी = नेत्रे, सम्मील्य = मीलयित्वा, नासम् = घोणम्, आकुञ्च्य = संकुच्य, पातितोभय जानु: = भूमौ स्थापित जानुद्वय:, उपविश्य = स्थित्वा, वामहस्तम् = सव्येतरहस्तम्, प्रसार्य = उत्फाल्य, सम्मुखे = अभिमुखे, पृष्ठत: = विपरीत:, पार्श्वतश्च = समीपतश्च, उपविष्ट: = स्थित:,

कैश्चित् ताम्बूलवाहकैः=ताम्बूलधारिकैः, अपरैः, निष्ठ्यूतादानभाजन हस्तैः=पतद्ग्रह पात्रहस्तैः अन्यैः अनवरतचालित चामरैः=सततसंचालित व्यजनैः, इतरैः, बद्धाञ्जलिभिः=सम्पुटितकरैः, लालाटिकैः=अधिपतिभाल मात्रावलोकन समर्थैः, परिवृतम्=परितः व्याप्तम्, रत्न जटितोष्णीषिका मस्तकम्=रत्न भरित—टोपिका धारिणम्, सुवर्णसूत्रेण=कनकतन्तुना, रचिता या विविधाः=अनेकविधाः, कुसुम कुड्मललताः=पुष्पकलिका वल्लयः, तासां प्रतानैः=वितानैः=अङ्कितः=अञ्चितः, कञ्चुकः= निचोलः, यस्य सः तम्, महोपवर्हम्=महोपधानम्, एकं क्रोड़े=अङ्के, निधाय=संस्थाप्य, तदुपरि=उपधानोपरि, संधारित भुजद्वयम्=स्थापित हस्त युगलम्, रजतपर्यङ्के=रजतपल्यङ्के, विविधफेनेन=प्रचुर डिण्डीरेण, परेनिलस्य=फेनसंवलितस्य, क्षीरधेः=समुद्रस्य, जलतलस्य—छविम्= शोभाम्, अङ्गीकुर्वत्याम्=धारयन्त्याम्, तूलिकायाम्=तूलमयो विष्टरः तस्याम्, उपविष्टम्=आसनेस्थितम्, अपजल खानम्=यवन सेनापितम्, च ददर्श=विलोकितवान् ।

पृष्ठ—85. सेनापते ! वर्षत्रयात्पूर्वमित्यादि ।

**सन्दर्भ**—तानरङ्गवेषधारी गौरसिंहः अपजलखानस्य सभायां निजभ्रमण सम्बन्धिनी बहुज्ञतां प्रकटयति ।

**व्याख्या**—सेनापते=चमूपते, वर्षत्रयात्=त्रिभ्यो वर्षेभ्यः पूर्वं=प्राक्, काश्याम्=वाराणस्यां, गंगायाम्=भागीरथ्याम्, संस्नाय्य=स्नानं विधाय, उज्जयिनीदेशानाम्=उज्जयिनीदेशवास्तव्यानाम्, क्षत्रियाणाम्=राजन्यानाम् कुलैः=वंशैः, अलंकृतम्=सुशोभितम्, भोजपुरम्=एतन्नामकं नगरम्, आलोक्य=दृष्ट्वा, गंगायाः=स्वधुन्याः, गण्डकस्य=नदीविशेषस्य, तटे= तीरे, उपविष्टम्=आसीनम्, हरिहरनाथम्=शिवं, प्रणम्य=नत्वा, विलासि-नाम्=भोगिनाम्, कुलेन=गणेन, विलसितम्=मण्डितम्, पाटलिपुत्रम्= पटनेति नाम्ना प्रसिद्धं नगरम्, उल्लंघ्य=अतिक्रम्य, सीताकुण्डविक्रम-चण्डिकादीनाम् पीठानाम्=धर्मस्थानानाम्, पटलेन=समूहेन, पूजितम् =वराजितम्, विक्रमस्य=एतन्नाम्नः भूपतेः, यशः कीर्तिः तत् सूचकम्

कीर्तिचिह्नविशेषम्, दुर्गावशेषः = अवशिष्ट दुर्गम्, तेन शोभितम् देवधुन्या. गंगायाः तरंगैः = वीचिभिः, क्षालिताः = धौताः = प्रान्ता = प्रदेशाः यस्य तत् मुद्गलपुरम्, निरीक्ष्य = विलोक्य कर्णदुर्गस्य = राधेय दुर्गस्य, स्थानेन तस्य यशोमुद्रया = कीर्तिचिह्नेन, इव अंकितम् = चिह्नितम् अङ्गवेशम् = दुर्योधनदत्तवेशम्, दिनत्रयम् = त्रीन् दिवसान्, अध्युष्य = उषित्वा, अतिवर्धनम्, वैभवम् = ऐश्वर्यं, यस्य तत् तथोक्तम्, वर्द्धमान नगरम् = एतन्नामक पुरम्, सम्यक् = साधुतया, संदृश्य = समवलोक्य, यथोचितैः = यथासाध्यैः, सम्भारैः = सामग्रीभिः, तारकेश्वरम् = महादेवम् उपस्थाप्य = पूजयित्वा, ततोऽपि = तस्मात् स्थानादपि पूर्ववङ्गदेशे = पूर्वीयबंगप्रदेशे, चिरम् = बहुकालम् अहं = तानरंङ्गः, अटाट्याम परिभ्रमणम्, अकार्षम् = व्यदधाम ।

पृष्ठ—86. आम् श्रीमन् ! पूर्ववङ्गमपि इत्यादि ।

सन्दर्भ—अपजलखानस्य अत्कण्ठापूर्णम् किं किं पूर्वबङ्गेऽपि ? इति वचनं श्रुत्वा तानरंगःसमुत्तरति आम् श्रीमन् ।

व्याख्या—आम् श्रीमन् = इत्थमेवेतत्, एष जनः — पुर उपस्थितोऽहम् पुर्ववगमपि = पूर्वीय वङ्गप्रदेशमपि, सम्यक् = साधुतया, अवालूलुकत् = अद्राक्षीत् । यत्र = पूर्वबंगे, प्रान्तेषु—तटेषु, प्रसृताम् = प्रफुल्लिताम्, पद्मावलीम् = राजीवराजिम् परिमर्दयन्ती = परिपीडयन्ती, द्रवीभूता = द्रवतामापन्ना, पद्मेव—लक्ष्मीरिव, पद्मा—एतन्नाम्नी नदी, प्रवहति यत्र पयः पूरस्य = जलप्रवाहस्य, प्रवाह परम्पराभिः = स्रोतोधाराभिः, शत्रुसेनायाः = रिपुसेनायाः, विनाशने, विध्वंसने, कुशलः = पटुः, ब्रह्मपुत्रः = नगरविशेषः इव ब्रह्मदेशम् विभजन = पृथक्-कुर्वन्, ब्रह्मपुत्रः = एतन्नाम्ना प्रसिद्धा नदी, महानदी = महती सरित्, भूभागम् = भूमिम्, क्षालयती = प्लावयति, पुनः यत्र = बंगे, साम्लेन = अम्लसहितेन, सुमधुरेण = अतिशयमधुना रसेन पूरितानि = भरितानि फूत्कारेण = मुखवायुना, उद्धूता = परिहृता, भूतिः भस्म येषां ते-फूत्कारोद्धूत भूतयः, तेषाम् ज्वलताम् = अग्निमताम्, अंगाराणाम् = महदग्निकणानाम्, विजित्वरः = जयशीलः, वर्णः = रूपं येषां

तानि तथोक्तानि, जगति = संसारे प्रसिद्धानि = विश्रुतानि, नारङ्गाणि = फलविशेषाणि उद्भवन्ति = उत्पद्यन्ते, । यद्देशीयानाम् = तद्देशोद्भवानां जम्बीराणाम् = दन्तशठानाम्, रसालाणाम् = आम्राणाम्, तालानाम् = ताल फलनाम्, श्रीफलानाम् = नारिकेलानाम् खर्जूराणाम् = प्रख्यातफलानाम्, च महिमा = गुणश्लाघा, सर्वदेश रसज्ञानाम् = सकलदेशरसास्वादयितॄणाम्, कर्णम् - श्रोत्रम्, साम्रेडम् = भूयोंभूयः, स्पृशति यत्र च भयङ्करैः = भयानकैः, आवर्तसहस्रैः = असंख्यतरंगैः, आकुलासु = संकुलासु, स्रोतस्विनीषु = नदीषु, सहोहोङ्कारम् = होहोशब्दयुक्तम्, क्षेपणीः = नौकादण्डान्, क्षिपन्तः = पातयन्तः, अरित्रन् = के निपातकम् चालयन्तः वडिशम् = मत्स्यवेधनम्, योजयन्तः = निवेशयन्तः, कुवेणीस्थानाम् = मत्स्यधानीस्थानाम्, म्रियमाणानाम् = मृत्युमुपगच्छताम्, मत्स्यानाम् = मीनानाम् परिवर्तनानि = आवलनानि, आलोकमालोकम् = दर्शंदर्श, आनन्दन्तः = प्रसीदन्तः ।

भिन्नेन = पिष्टेन, अञ्जनेन = कज्जलेन, लिप्ताः कृत विलेपनाः, इव मस्या = स्नाता इव, साकाराः = मूर्तिमन्तः, अन्धकाराः = तमांसि इव कालाः = कृष्णवर्णाः धीवरबालाः = कैवर्तकन्यकाः, अदृष्टतटेष्वपि = अनवलोकिततीरेषु, महाप्रवाहेषु = महाझरेषु, स्वल्पाकारया, = अतिलघ्वा, कूष्माण्ड फक्किकया = कूष्माण्डखण्डेन, तुल्या, आकारम् = आकृतिः यस्याः तया तथोक्तया नौकया = नावा, निर्भयाः = निर्भीकाः क्रीडन्ति = खेलन्ति ।

पृष्ठ 90—**परितश्च**

**सन्दर्भः**—शिववीरसहचरस्य वैशिष्ट्यमत्र प्रतिपादितम्—

**व्याख्या**—परितश्च = समन्तात्, तस्यैव = विपिष्टा अनोपविष्टस्य शिववीरस्य, खर्वाम् = ह्रस्वाम्, अपि अखर्वपराक्रमाम् = अतिशय पराक्रमाम्, श्यामामपि = कृष्णामपि, यशसमूहेन = कीर्तिकूटेन, श्वेतीकृतम् = धवलीकृतम् त्रिभुवन यथा ताम् कुशासनाश्रयामपि = दर्भविष्टरस्थितामपि, नतु कुत्सितासनस्थिताम्, सुशासनाश्रयाम् = सुराज्याश्रयान्

पठनपाठनादि परिश्रमानभिज्ञामपि = अध्ययनाध्यापन श्रमपरिचयरहितामपि, नीतिनिष्णाताम् = नीतियुक्ताम्, स्थूलदर्शनामपि = विशालदर्शनवतीमपि सूक्ष्मदर्शनाम् = तीव्रबुद्धियुताम्, ध्वंसकाण्डव्यसनीमपि = विधर्मिहिंसा व्यसनीमपि, धर्मधौरेयीम् = धर्मधारणीम्, कठिनामपि = अकोमलामपि, कोमलाम् = अक्लिष्टाम्, उग्रामपि = दुर्धर्षामपि, शान्ताम् = दयादिगुणयुताम्, शोभितविग्रहामपि = शरीराङ्ग शोभितामपि, दृढ़ सन्धिबन्धाम् = शरीराङ्गदृढवताम्, शत्रुभिःसह अचलसन्धियुक्ताम् इत्यर्थः, कलितगौरवामपि = धारितगौरवामपि, कलितलाघवम् = चातुर्यसम्पन्नामित्यर्थः, विशालललाटाम् = आयतमस्तकाम्, प्रचण्डबाहुदण्डाम् = प्रबलभुजदण्डाम्, शोणापाङ्गाम् = रक्तकटाक्षाम्, कम्बूग्रीवाम् = शंखकण्ठाम्, सुनद्धस्नायुम् = श्लिष्ठस्नायुतन्तुम्, वर्तुल-श्याम-श्मश्रुम् = वर्तुल कृष्ण श्मश्रुम्, धारिताकृतिम् = गृहीताकृतिम् इव वीरताम् = शूरताम्, विग्रहिणीम् = कायवतीम्, धीरताम् समासादितसमर स्फूर्तिम् = समासादितप्राप्तसमरे, स्फूर्तिर्ययोस्ताम्, मूर्तिम् = आकृतिम्, दर्शम्-दर्शम् = बहुधाविलोक्य परम् = उत्कृष्टम्, प्रसादम् = प्रसन्नताम्, आसादयन्तः = प्राप्नुवन्तः तस्य = शिववीरस्य, वयस्याः = मित्राणि, कटान् = तृणवेष्टरानि, अध्यवसन् = आवसन् ।

अलंकाराः—अत्र लुप्तोपमा, उत्प्रेक्षा, विरोधाभासाः वर्तते ।

पृष्ठ—105—अथ कथञ्चित् प्रकाश बहुले—

अथ—चिन्ताऽऽक्रान्तैः यवन सेनाभियुद्धे क्षेत्रं सम्प्राप्ते, कथंचित् प्रकाशबहुले = ज्योत्यधिके, संवृत्ते = प्रसृते, नभः स्थले = गगने, परस्परं, परिचीयमानासु = अवगम्यमानासु, आकृतिषु = मुखाकृतिषु, कमलेषु = पङ्कजेषु, इव विकचताम् = विकासभावम्, आसादयत्सु = सञ्जातेषु, वीरवदनेषु = शूरवदनेषु, मुखेषु, भ्रमरालिषु = द्विरेफपङ्क्तिषु, परितः = समन्तात् प्रस्फुरन्तिषु = सचलन्तीषु, असिपंक्तिषु = असीनां = चन्द्रहासां पंक्तिषु = आलिषु, चटकैः = चटकनामपक्षिविशेषैः, चकचकायितेषु = शब्दापितेषु, कवचचमत्कारेषु = कवचानां = उरश्छदानाम्,

चमत्कारेषु = तादृशशब्देषु, गोपीनाथः = पण्डितः वारमेकं, शिववीर-दिशि = शिववीरस्य क्षेत्रे, परतश्च, यवनसेनापति दिशि = यवनसेनाध्यक्षाशायाम्, गतागतं = गमनागमनम् विधाय, सेनाद्वयस्य = मराठायवन कटकयोः मध्ये = अन्तरे, एव, कस्मिंश्चित्, पटकुटीरे = वसनगृहे, अफजलखानम् आनेतुं प्रबबन्ध = व्यवस्थापितवान् ।

अत्र गद्ये उत्प्रेक्षा तथोपमालंकारः ।

इति द्वितीयो निश्वासः

## अथ तृतीयो निश्वासः

पृष्ठ (113) जीवन् नरो भद्रशतानि पश्येत् ।

भावार्थ—सुखदुःखमयं हि मानव-जीवनम् । यथा दिवसानन्तः रात्रिः रात्र्यनन्तरं दिवसः तथैव दुःखानन्तरं सुखस्यागमः सुनिश्चितः । अतो मनुष्येण दैवादापदं, प्राप्यापि, धृतिर्न त्याज्या, जीवितः तस्य अनेकेषां प्रमोदावसराणां लाभः संभाव्यते । प्रकृते च पितृभ्यां विहीनौ बालादेव गौरश्यामौ गृहात्परिभ्रष्टौ, चिराच्च पितृनिर्विशेषं स्वपुरोहितं देवशर्माणं भगिनीं सौवर्णीञ्च, प्राप्नुवन्तौ । सौवर्ण्याः तदनुरूपेण वरेण सह विवाहं स्वपदोन्नतिं सर्वैश्वर्यलाभं चानुभूतवन्तौ । पुरोहितोऽपि च सर्वतो नैराश्यान्ध कारावृतः सौवर्ण्याः गौरश्यामयोश्च तत्पित्रोरभावे परिपालनं विदधत् सुखदां तदैश्वर्यज्योत्स्नां समुपलभ्य नितरां प्रासीदत् ।

पृष्ठ (113) संसारेऽपि सतीन्द्रजालमपरं यद्यस्ति तेनापि किम् ?

भावार्थः—संसारः ऐन्द्रजालाख्यं वस्तु । अन्यत्स्यादपि चेत् तन्नैतस्मात् अधिकं, चमत्कृतिमत् दुरवगमश्च चरितमिति तत्त्वम् । प्रकृते च गौर-श्यामयोः सौवर्ण्याश्च बाल्य एव पित्रोर्मरणम् तेषाम् दस्युनिग्रहः, ततः पलायनम्, मन्दिराध्यक्षस्य साहाय्येन शिवराजसाक्षात्कारः पौनः-पुन्येन अपह्रियमाणायाः सौवर्ण्याः प्राप्तिः तयोश्च पुरोहितचरणलाभः इत्येतत् सर्वमपि आश्चर्यप्रदमेव ।

यौ गौरश्यामौ दीनौ सन्तौ वनेषु पर्याटताम्, यौ च अनन्तरं

शिववीरस्य साधारणसेवकौ अभवताम् तावेव अन्ते अतुलित विभव-संपन्नौ समजायेताम् अपि च कुमार रामसिंहस्य कथा तु ततोऽप्यधिक-मिन्द्रजालमिति सुविदितमेव ।

पृष्ठ (117) तावत् कुटिराद् बहिः—

तावत् = पुरोहितादीनां रोदनकोलाहलं श्रुत्वा, कुटिराद् = आश्रमाद्, बहिः = बहिर्भागे कस्मिंश्चित् = कुत्रचित, कार्ये = उद्योगे, व्यासक्तः = संलग्नः, गौरपटुः = ब्रह्मचारी बालः, विलापेनैतेन = पुरोहित-रोदनेन, कर्णयोः आकृष्यमाण इव = श्रूयमाण इव, त्वरितमन्तःप्रविवेश क्षिप्रमन्तः प्रविवेश, पौनःपुण्येन = वारं वारम्, दृष्ट्वा = विलोक्य, तां कन्यां = कोशलां, देवशर्म्माणं = एतन्नामकं पुरोहितं, वृद्धब्राह्मणम् = वृद्धद्विजम् च परिपक्वं = जीर्णं यत् तालीदलम् तद्वद्भूता या कपोल-पाली = गण्डप्रान्तो यस्य सः, उदञ्चिता = प्रोद्गता, रोममाली = लोमावली यस्य सः, त्वरिताभ्याम् = शैघ्रयुताभ्याम्, कोष्णाभ्याम् = ईषदुष्णाभ्याम्, श्वासप्रभवाभ्याम्, शालते = शोभते, इति, शारद शर्वरी = शरदे भवा शारदी सा चाऽसौ, शर्वरी = निशीथिनी, तस्या शर्वरी सार्व-भौमस्य = शशाङ्कस्य किरणानाम् = दीधितीनाम्, किरणेन = क्षैपणेन, उद्भूतोद्भूतम् = अस्वल्पनियतिम्, यत् किलालम् = पानीयम्, तस्य आली = पंक्तिः, तया व्यालीढ़ः = ग्रस्तः, यः चन्द्रकान्तः = तन्नामामणि-विशेषः, तस्य जालीभूते = समुदायभूते, लोचने = नयने यस्य सः, वाष्पावरुद्ध कण्ठः = अश्रुभिःसंरुद्ध कण्ठः, किमपि वृत्तान्तम् = कथाम्, स्मारितः इव अनुभावित इव किमपि, चिरविनष्टं = चिरवियुक्तं, प्रेयांसं = अतिप्रियम्, प्रापितः = लम्भित इव, किमपि चिरानुभूतं दुःखं, पुनरनुभावितः = पुनः प्रापित इव च स्मारं स्मारमिव = भूयोभूयः स्मरन्, स्वसमानदशं = स्वेन समाना, दशा = अवस्था यस्य तम्, श्यामवटुं = श्यामसिंहं, सम्बोध्य = आहूय, कातरेण = दुःखेन, भज्यमानेन = त्रुट्यता, कम्पमानेन = सवेपथुना, च स्वरेण = रवेण, अचकथत् = अवदत् ।

अत्रोत्प्रेक्षाऽलंकारः ।

पृष्ठ = 122. अस्ति कश्चन धैर्यधारिधुरन्धरैः इत्यादि—

सन्दर्भ—ब्रह्मचारि गुरोः अनुरोधेन गौरसिंहः निजजन्मभुवम् परिचाययन् राजपुत्रदेशं वर्णयति ।

व्याख्या—कश्चन = प्रसिद्धः, क्षत्रियवर्यैः = राजन्यश्रेष्ठैः, आर्यवर्तैः = द्विजवरैः, आर्यवर्यैः = वैश्यवरैः व्याप्तः = संकुलः, राजपुत्रदेशः = एतन्नामा प्रसिद्धदेशः अस्ति ।

क्षत्रियवर्यादीन् = विशिनष्टि । यथा धैर्यधारिषु = धृतिशालिषु, धुरन्धरैः = अग्रेसरैः, धर्मोद्धारे = धर्मोद्धारणे, धौरेयैः, सोत्साहम् = उत्साहेन सह, चञ्चन्तः = स्फुरन्तः, चन्द्रहासाः = खड्गाः येषां तैः सुशस्तयः, = शोभनानि, शस्त्राणि येषां तैः, सद्यश्छिन्नेभ्यः = पृथक् कृतेभ्यः, परिपन्थिनाम् = रिपूणाम्, गलेभ्यः, = कण्ठेभ्यः गलता = स्रसता, शौणितेन = रुधिरेण पूरिताः = व्याप्ताः छिन्नाः = गुप्ताः, छुरिकाः = असिधेनुका येषां तैः, भयोद्भेदनाः = भीतिनिवारणाः, भिन्दिपालाः = शस्त्रविशेषाः, यन्त्राणि येषां तैः, घनानाम् = प्रचुराणाम्, विघ्नानाम् = प्रत्यूहानाम्, विघट्टकः = विनाशकः, यो घर्घराघोषः, = घर्घर शब्दः तेन घोराः = भयंकराः शतघ्न्यः = अस्त्र विशेषाः = (तोप) इति नामाख्याताः, येषां तैः, स्वप्रतिकूलानां = स्वविरुद्धानाम्, कुलस्य = वृन्दस्य, उन्मूलनानुकूले = प्रध्वंसनरूपे, व्यापारे = कर्मणि, व्यासक्तानि = संलग्नानि येषां तैः ।

प्रत्यर्थिनः = शत्रोः, शुण्डिनः = गजः तेषां शुण्डानाम् = कराणाम् खण्डने = दलने, उद्दण्डाः = उत्कटाः, भुशुण्डयः = अस्त्र विशेषाः येषां तैः, प्रचण्डयोः = विक्रमशालिनोः, दोर्दण्डयोः, = भुजयुगलयोः, वैदग्ध्यस्य = चातुर्यस्य, भाण्डानि = भाजनानि, प्रकाण्डानि = सुविशालानि, काण्डानि = वाणाः येषां तैः, तथोक्तैः क्षत्रियैः, आर्यवर्यैश्च व्याप्तः राजपुत्रदेशः अस्ति ।

अत्र गद्ये—यमकालंकारः ।

पृष्ठ — (123) यत्र कोष पूरिता काञ्चनमयाः—

सन्दर्भ—गौरसिंहः निजजन्मभुवम् परिचाय्य, राजपुत्रदेशस्य सौन्दर्यं वर्णयति ।

व्याख्या—यत्र = राजपुत्रदेशे, कोषैः = निधिभिः, पूरिताः = भरिताः, सानुमन्तः शृङ्गिणो गिरयः, काञ्चनमया इव = सुवर्ण स्वरूपा इव, महार्हाणाम् = बहुमूल्यानां, मणीनाम् = रत्नानाम्, गणेन = समूहेन, जटितैः = खचितैः, जाम्बूनद भूषणैः, = कनकालंकारैः, भूषिताः, = अलङ्कृताः, गन्धर्वाः = देवयोनयः, इव जनाः = लोकाः (सन्ति) । विचित्राः —आश्चर्यप्रदाः, गवाक्षजालानि, = वातायनानि, अट्टालिकाः = चन्द्रशालाः, अङ्गणानि = अजिराणि, कपोतपालिकाः = विटङ्काः, चत्वराणि = चतुष्पथानि, गोष्ठानि = व्रजाः, भित्तिकाः = कुड्यानि, येषु तैः, तथोक्ताः । विश्वकर्मणा = स्थापत्याधिष्ठातृदेवतया, रचिताः = निर्मिताः, इव गृहाः, = भवनानि (सन्ति) सादिकरस्थानाम् = अश्वारोहि पाणिस्थितानाम्, कशानाम् = तोत्राणाम्, अग्रेण = पुरोभागेन यः चालनसंकेतः, प्रेरणेङ्गितम् तेन, चलितानाम् = गतिमताम्, सप्ति समूहानाम् = अश्वनिवहानाम् ये शफसमूहाः, = खुरनिकराः तेषां सम्मर्देण = संघर्षेण, समुद्भूतया = समुत्थितया, धूल्या = रेणुना, धूसरिताः; = धूलिव्याप्ताः मार्गाः = पन्थानः (सन्ति) ।

अत्र गद्ये उत्प्रेक्षालंकारः ।

पृष्ठ—125 को न जानीते उदयपुरराज्यम् इत्यादि ।

सन्दर्भ—गौरसिंहस्य वचनं श्रुत्वा ब्रह्मचारिगुरुः उदयपुर राज्यस्य वैशिष्ट्यं प्रकटयन् कथयति को न जानीते उदयपुर राज्यम् ।

व्याख्या—को न जानीते = को न वेत्ति, उदयपुर राज्यम् = एतत्संज्ञकं प्रसिद्धं नगरम् (सर्वेऽपि जानन्तीति काकुः) यदीये = यत्सम्बन्धिनी, चित्रपुरदुर्गे, = चित्तौड़ इति प्रसिद्धे दुर्गे, कमलाः = लक्ष्म्यः, ता इव

विमलाः = निर्मलाः, शारदाः = सरस्वत्यः, ता इव विगता शारदा = सरस्वती = (विद्या) याभ्यः तथोक्ताः । या विशारदाः सा कथं शारदा समाना इति विरोधे, परिहारः = वि-विशेषेण शारदाः कुशलाः विद्यावत्यः, विशारदाः = (शेष पूर्ववत्) अनसूया = अगस्त्यपत्न्यः ता इव अनसूयाः = निन्दा रहितः, यशोदा = नन्दपत्न्यः, ता इव यशोदा = यशोदान्य;, सत्याः = वासुदेव पत्न्यः (सत्यभामेति प्रसिद्धा) ता इव सत्याः = सत्यवादिन्यः रुक्मिण्यः = कृष्णस्त्रियः, ता इव, रुक्मिण्यः = सुवर्णवत्यः, सुवर्णा इव = कनकानीव, सुवर्णा; = शोभनवर्णाः, सत्यः = महादेवस्य प्रथम स्त्रियः ता इव सत्याः = साध्व्यः, परःसहस्राधिकाः, क्षत्रिय कुलाङ्गना = क्षत्रियरमण्यः, संभाव्यमानः = तर्क्यमाणः, यः, यवनानाम् = म्लेच्छानाम्, बलात्कारः = घर्षणम्: तस्य धिक्कारेण, = धिक्करणेन, ऊर्ज्जस्वलम् = कान्तिमत्, तेजः यासाम् ताः तथोक्ताः, योगाग्निने = योग समुत्पादितेन = स्वकोपानलेनेव, वह्निनेव, पति विरहानलेनेब = भर्तृ वियोगानलेनेव क्रोधाग्निनेव, सन्दीपितासु = प्रज्वालितासु ज्वाला जालाञ्चितासु = अग्निशिखा परीतासु चितासु = चितिषु स्वपतीन = स्वभर्तृन्, स्मारं स्मारं = भूयोभूयः स्मृत्वा स्वकीयानाम् = आत्मीयानाम्, परकीयाणाञ्च = परेषाञ्च, पश्यतामेव अवलोक्यतामेव तेषु पश्यत्सु च, पतङ्गतां = शलभताम्, अङ्गीकृत्य = स्वीकृत्य, गंगाधरस्य = शिवस्य, अङ्गभूषणताम् = शरीरालंकारताम् भस्मतामिति यावत्, अगमत् = अयात् । (आत्मानं दाहयामसुरित्यर्थः) ।

अत्र गद्ये उपमा—विरोधश्चालंकारः ।

पृष्ठ—131. ततश्च दुग्ध धाराभिरिव—

व्याख्या – ततश्च = मन्दिराध्यक्ष-प्रदत्त मोदक-भक्षणानन्तरम् दुग्धधाराभिरिव = क्षीर धाराभिरिव, प्रथमम् = आदौ, प्राचीम् = पूर्वां (दिशां) संक्षक्ष्य, भस्मितच्छुरितामिव = भस्म लिप्तामिव, विधाय = कृत्वा, चन्दनैः = श्रीखण्डैः;, संचर्च्य = अनुलिप्य, कुन्दकुसुमैः = कुन्दपुष्पैः, इव

अवाकीर्य = व्याप्य, गगनसागरमीने इव: = गगन: = आकाश एव सागर: = समुद्रस्तस्य मीने = मत्स्य इव, मनोजमनोज्ञहंसे इव = मनसिजचेतोहरे = हंसे = पक्षिविशेषे इव विरहिनिकृन्तनरौप्य कुन्त प्रान्ते इव = विरहिणाम्, वियोगिनाम्, निकृन्तनाय = कर्तनाय, रौप्यस्य = रजतवद्प्रकाशमानस्य, कुन्तस्य = भल्लस्य, प्रान्त इव, पुण्डरीकाक्षपत्न्या: = विष्णुस्त्रिया: लक्ष्म्या:, करपुण्डरीकपत्रे = पाणिस्थकमलदले, इव, शरदि भवं शारदम्, अभ्रम् = मेघ;, तत्सारे = तत्तत्वांशे इव, सप्तसप्ति: = सूर्य: तस्य सप्ति: = घोटक:, तत्पादच्युते = तच्चरणपतिते राजते = रौप्ये च तस्मिम् खुरत्रे इव मनोहरता महिलाललाटे = सुरूपरताकामिनि भाले इव, कन्दर्पकीर्ति-लताङ्कुरे इव = कामदेव व्रतत्यंकुरसमाने, प्रजाजनानाम् = लोकनाम् नयनानि = नेत्राणि तेषां कृते कर्पूरखण्डे = हिमवालुकाशकले इव तमीतिमिर कर्तनाय = रान्त्यन्धकारनाशय, शाणेन कर्षेण, उल्लीढे = तेजिते, निस्त्रिंशे = खड्गे इव, च समुदिते = उदयंप्राप्ते, चैत्रचन्द्रखण्डे = चैत्रबालहिमांशो तत्प्रकाशेन = उदित चन्द्र प्रकाशेन, स्फुटम् = स्पष्टम्, प्रतीयमानासु = दृश्यमानासु, सर्वासु दिक्षु = दिशासु, अहं = गौरवटु:, परित: दृक्पातम् = दृष्टिपातम्, अकार्षम् = अकरोम् ।

अलंकारोऽत्रोत्प्रेक्षा ।

**पृष्ठ—143. अथ भगवन्—।**

अथ = गौरसिंहेन स्ववृत्तान्तं-कथनारम्भात्पूर्वं यज्जातम् तदन-न्तरं (सम्प्रतिगौरसिंह स्ववृत्तान्तं प्रतिपादयति), भगवन् = श्रीमन्, श्रूयते = आकर्ण्यते, (यत्) सुदूरं, अस्थात् स्थानात् = प्रस्तुतदेशात्, कोङ्कणदेश: = एतत् स्थानम्, मध्ये = अन्तरा च, विकटा: = भीषणा:, अटव्य: = काननानि, शतश: शैलश्रेणय: = पर्वतमेखला:, त्वरिताद्रुतगा-मिनी धारा = प्रवाहो यस्यां तां धुन्य: = नद्य:, पदे पदे च = प्रतिपदम्, अम्बूकृतसङ्कुलानाम् = सनिष्ठीवानाम्, भयानक भल्लूकानाम् = विभीषो-त्पादकऋक्षाणाम्, मुस्तामूलोत्खनन घुर्घुरायितघोर घोणानाम् = मुस्ता-

मूलोत्खनने = कुरुविन्दमूलोत्पाटने, घुर्घुरायिता = घुघुरशब्दायिता, घोणाः =नासाः येषां तेषाम्, घोणिनाम् =अरण्यशूकराणाम्, पङ्कपरिवर्तनोन्मथित कासाराणाम् =पङ्कपरिवर्तन = जलार्द्रभूमौ लुण्ठनेन, उन्मथिताः = =विलोडिताः कासानाराः =सरांसि यैः तेषाम् कासानाराः =सरांसि यैः तेषाम् कासानाराणाम् =वन महिषानाम्, नरमांसम् =नरपललम्, बुभुक्षाणाम् =असनेच्छूनाम्, तरक्षूणाम् = व्याघ्राणाम्, विकटाः =भीषणाः करटिनः =हस्तिनः तेषां कटानां = गण्डस्थलानां, विपाटनस्य = विदीर्णस्य पाटनेन =चातुर्येण पूरितम् सहननम् =अङ्गम् येषां तेषाम् सिंहानाम् =केसरिणाम्, नासाग्र—खड्गिनाम् =नासाग्रे =घोणाग्रे, विद्यमानस्य विषाणस्य =शृङ्गस्य, शाणनच्छलेन =तेजनव्याजेन, विहितानि, गण्डशैलानाम् =पर्वत शिखराणाम्, खण्डनानि यैस्तेषाम्-खड्गिनाम् =धेनुष्कानाम्, दोर्दुल्य-धुरन्धराणाम्-दोदुल्यमाणाः = उत्पतन्तः, द्विरेफाः =षट्पदाः, तेषां दलेन =वर्गेण, पेपीयमानया =पुनः पुनरास्वाद्यमानया, दानधारया =मदपङ्क्त्या, धुरन्धराणाम् =अग्रेसराणाम्, सिन्धूराणाम् =वनगजानाम्, कृपा कृपण बर्बराणाम् =कृपाकृपणैः =दयादरिन्द्रैः, कृपाणैः =असिभिः, छिन्नेभ्यः कृत्तेभ्यः, दीनानां अध्वनीनाम् =पथिकानाम्, गलतलेभ्यः =कण्ठस्थानेभ्यः गलत्पीनधारस्य = स्रवतस्थूलशोणितस्य, बिन्दुवृन्देन =पृषत्समूहेन रञ्चितानाम् = व्याप्तानाम्, वारवाण-सारसनोष्णीषाणाम् =कञ्चुक मेखलाशिरस्त्राणानाम्, धारणेन आकलितः =विहितः, अखर्बगर्व =विपुलाहङ्कारः, यैस्ते च ते बर्बराः =कर्कशा, तेषाम्, लुण्ठक निकराणाम् = दस्युवृन्दानाम् च सर्वथा =प्रायशः, साक्षात्कारः =मेलनम्, सम्भवः = सम्भाविता भवति ।

**पृष्ठ—153. तत्र वरटाभिरनुगम्यमानानाम् इत्यादि—**

**सन्दर्भ—गौरसिंहः निजातीत कथां श्रावयति—**

**व्याख्या—तत्र =अमृतोदनाम्नि सरसि, वरटाभिः =मरालीभिः,**

अनुगम्यमानानाम् = अनुस्त्रियमानानाम्, राजहंसानाम् = मरालानाम्, पक्षतेः = पक्षमूलस्य, या कण्डूतिः = कण्डूः तस्याः कषणे, = कण्डूयने चञ्चलानि = तरलानि, चञ्चु पुटानि = तुण्डानि, येषां तेषां तथोक्तानां, मल्लिकाक्षाणाम् = हंसानाम्, लक्ष्मणायाः = सारंगनायाः, कण्ठस्य = गलस्य, स्वरेण = रुतेन यो हर्षवर्षः = आनन्दसन्दोहः, तेन प्रफुल्लानि = उदञ्चितानि, अंगरुहाणि = रोमाणि, येषां तेषां, सारसानाम् = पक्षि विशेषानाम् भ्रमताम् = उत्पतताम्, भ्रमराणाम् = द्विरेफाणाम्, झङ्कार भारेण, = झंकृति प्राचुर्येण, विद्राविताः = अपसारिताः, निद्रा = प्रमीला येषां तेषां कारण्डवानाम् = पक्षि विशेषाणाम्, ताः ताः = भिन्नाः भिन्नाः, शोभाः = रामणीयकानि, पश्यन्ती = अवलोकयन्ती, तडाग तटे = सरस्तीरे, एव, पस्फुल्यमानानाम् = अतिशयेन प्रस्फुटताम्, मकरन्द तुन्दिलानाम् = पराग भरितानाम्, इन्दीवराणाम् = नील कमलानाम् समीपत एव = पार्श्वे एव, मसृणपाषाण पट्टिकासु = चिक्कण शिलातलेषु, कुशासन = दर्भास्तरणानि, मृगचर्मनिर्मितानि = हरिणचर्म निर्मितानि, उर्णासनानि = मेषरोम-निर्मितासनानि, च विस्तार्य = प्रसार्य, उपविष्टानाम् = निषण्णानाम्, गायत्रीजपाधीनानि = सावित्री जापपराणि, दशनवसानि = दन्तच्छदा (ओष्ठाः) येषां तेषां, कलितम् = विहितम् = ललिताम् = चारु, तिलकालकः चन्दनम्, यैः, तेषाम् दर्भाङ्गकीयकैः = कुशनिर्मिताभिः उर्मिकाभिः, अलकृताः = भूषिताः, अंगुलयः, = करशाखाः, येषां तेषां, तथोक्तानाम्, मूर्तिमतामिव = धृतविग्रहाणामिव, ब्रह्मतेजसाम् = ब्रह्मशक्तीनाम्, साकारणामिव = मूर्तिमतामिव, तपसाम् = तपश्चर्याणाम्, धृतावताराणामिव = शरीरिणामिव, ब्रह्मचर्य्याणाम, मुनीनाम् = ऋषीणाम्, दर्शनम् = साक्षात्कारम्, कुर्वन्ती = विदधती, कृतनित्यक्रियाम् = निर्वर्तित-नियम-विधिम्, परिपुष्टया = स्थूलया, तुलसीमालिकया = तुलसीवलयेन, अंकितः = भूषितः कण्ठो यस्य तम् सिन्दूरस्य = नागसंभवस्य, ऊद्ध्र्व पुण्ड्रेण = ऊद्ध्र्व रेखया, मण्डितः = शोभितः, ललाटः = मस्तकम् यस्य तम्, राम-

चरणयो: = दाशरथिपादयो: विह्नमुद्र्या = अङ्कमुद्र्या, मुद्रितौ = चिह्नितौ, बाहुदण्डौ = भुजयुगलम्, वक्षस्थलञ्च = उरोभागञ्च यस्य, तम् हनुमन्मन्दिराऽध्यक्षम् = मारुति-मठ-स्वामिनम्, प्रणतवन्तौ = अभिवादितवन्तौ ।

अत्र गद्ये — उत्प्रेक्षालंकार: ।

इति तृतीयो निश्वास:

## 4. अथ चतुर्थो निश्वास:

पृष्ठ = 161. मासोऽयमाषाढ:, अस्ति च सायं समय: ।

सन्दर्भ :—शिववीर दूतो रघुवीरसिंह: आवश्यकं वाचिकं सन्देशं पत्रञ्चादाय तोरण दुर्गं समायाति, तत्र निश्वासस्यादौ वर्षर्तु-शोभां वर्णयति कवि: ।

व्याख्या :—अयम् एष: आषाढ: = शुचि: नाम प्रसिद्ध: मास: अस्ति सायं = सन्ध्या कालिक समय: काल: च (अस्ति) अस्तम् = अस्ताचले, जिगमिषु: = गन्तुमिच्छु:, भगवान् = ऐश्वर्यवान्, भास्कर: = सूर्य:, सिन्दूर = द्रवेण = नागोद्भवरसेन, स्नातानामिव = कृतस्नानानामिव, वरुणदिक् = पश्चिमाशा, तदवलम्बिनाम् = तदाश्रितानाम्, अरुण वारिवाहानाम् = रक्त मेघानाम् आभ्यन्तरं = मध्ये, प्रविष्ट: = निलीनो जात: ।

कलविङ्का: = चटका:, चाटकै: = अपत्यसहितै:, रुतै: = शब्दै: परिपूर्णेषु, नीडेषु = कुलायेषु, प्रतिनिवर्तन्ते = परावर्तन्ते । वनानि = काननानि, प्रतिक्षणम् = प्रतिपलम् अधिकाधिकम् = क्रमश: वृद्धि गताम्, श्यामत: = नीलरूपताम्, कलयन्ति = धारयन्ति ।

अथ = तदनन्तरं, अकस्मात् = सहसा, परित: = सर्वत:, मेघमाला = वारिदराजि:, पर्वतश्रेणी इव = शैलपंक्तिरिव, प्रादुरभूत् = समुत्पन्ना जाता । क्षणम् = मुहूर्तम्, सूक्ष्म: = स्वल्प: विस्तार: यस्य सा, सूक्ष्म शिखरि शिखराणाम्, = महीधर श्रृंगिणाम्, विडम्बनम् = अनुकृति: यया

सा, अथ = अनन्तरं, दर्शितः = प्रकटीकृतः, दीर्घेण = लम्बायमानेन, शुण्डेन = करेण, मण्डितस्य = भूषितस्य, दिगन्त दन्तावलस्य = दिक्करिण,: भयानक = भीतिप्रदः, आकारः = आकृतिः यया सा, पारस्परिक संश्लेषेण = इतरेतर सम्मेलनेन, विहितः उत्पादितः, अन्धकारः = अन्धतमसं यया सा, समस्तं = सम्पूर्णं, गगनतलम् = आकाश मण्डलम्, पर्यच्छदीत् = व्याप्नोत् ।

अत्र गद्ये उत्प्रेक्षालंकारः ।

पृष्ठ 179. तावत् तेन पयः फेनासार च्छवि —

**सन्दर्भ** :—रघुवीरे तोरणदुर्गं गत्वा समर्पितपत्रे स्वरालापाः समश्रूयन्त इति वर्णयति काव्यकारः ।

**व्याख्या** :—तावत् = तदभ्यन्तरे, तेन = रघुवीरेण, पयः फेनानाम् = दुग्ध डिण्डीराणाम्, आसारस्य = धारासम्पातस्य, छवेः = सौन्दर्यस्य, विजित्वरया = जयनशीलया, ज्योत्स्न्या = चन्द्रिकया, द्विगुणीकृतोत्साहेन = प्रवर्द्धित हर्षप्रकर्षेण, धीर समीरस्य = मन्द वातस्य, स्पर्शेन = संयोगेन, शान्तः = दूरंगतः, श्रमः = खेदो यस्य तेन, स्फुरन्त्या = चाञ्चल्यमुपगच्छन्त्या, चन्द्रकलया = चन्द्रिकया, विकासितासु = पुष्पकलिकासु, भ्रमताम् = चरताम्, भ्रमराणाम् = द्विरेफाणाम्, झङ्कारभारेण, = गुञ्जनातिरेकण, सञ्जातः यः मन्द्रस्वरःतदेव पीयूषम् = अमृतम्, तस्य शीकरैः = कणिकाभिः परिमार्जिते = शोधिते, श्रवणे = कर्णौ यस्य तेन, केचित् = कियन्तश्चित्, शुकी मूकयन्तः = निश्शब्दं कुर्वन्तः, हसीध्वंसयन्तः = हंसस्वरान् तिरस्कुर्वन्तः, सारिका निःसारयन्तः = सारिकास्वरं दूरमपसारयन्तः, कोकिलान् = पिकान्, विकलयन्तः = वैकल्यं प्रदर्शयन्तः, वीणां = वाद्यं, विगणयन्तः = अवहेलयन्तः, काकली कलमयाः = पिकशब्दतुल्याः स्वरालापाः = ध्वनितशब्दाः, समश्रूयन्त = श्रुताः । श्रवणेनैव = कर्णविषयीकृत्यैव, तेन = रघुवीरेण, अवगतम् = ज्ञातम् यत् एते आलापा = ध्वनयः, कस्या अपि बालिकाया = कन्यकाया, (सन्ति) सा च = बालिका लज्जापरवशा = त्रपाधीना

यत् = यस्मात्, उच्चैः = उन्नतैः स्वरैः, न गायति, उच्च कुल प्रसूता = श्रेष्ठ वंशोद्भवा, यत् = यस्मात्, अन्यासाम् = बालिकानाम्, एवम् = ईदृशी, उदारा = गम्भीरा, वाक् = वाणी न भवितुमर्हति । समीपवर्तिनी = निकट-स्था एव यतः स्फुटः स्वरः = स्पष्टः शब्दः, च पुनः पूर्वस्यां दिशि उप-विष्टा = समासीना, यतः ततः एव = पूर्वतः एव मूर्च्छना = कलमयाः शब्दाः, मूर्च्छन्ति = उद्भवन्ति ।

पृष्ठ — 182. सेयं वर्णेन सुवर्ण कलरवेण —

सन्दर्भ :—रघुवीर सिंहः स्वरालापं श्रुत्वा पुष्पोद्याने गतवान् तत्र च तेन दृष्टा यत् एका कन्यका किमपि मन्दं मन्दं गायतीति ।

व्याख्या :—सा कन्यका, इयम् = एषा, दृश्यमाना वर्णेन = शारीरिक-वर्णेन, सुवर्णं = कनकं, कलरवेण = सुमधुरशब्देन, पुंस्कोकिलान् = पिकान्, केशैः = कचैः, रोलम्बकदम्बानि = भ्रमरवृन्दानि, ललाटेन = भालेन, कलाधरकलाम् = चन्द्ररेखाम् लोचनाभ्याम् = नयनाभ्याम्, खञ्जनान् = पक्षिविशेषान्, अधरेण = अधरोष्ठेन, बन्धुजीवम् = रक्तकु-सुमम्, हासेन = मुखविकासेन, ज्योत्स्नाम् = कौमुदीम्, तिरस्कुर्वती = निन्दन्ती, वयसा = अवस्थया, एकादशमिव वर्षम् = एतत्संख्याकम् हायनम्, स्पृशन्ती = स्पर्शं कुर्वन्ती, श्यामम् = ईषद् श्यामवर्णं, कौषेय वस्त्रम् = पट्ट वसनम् परिधानं यस्याः सा, श्वेत बिन्दूनां = सित बिन्दूनाम्, सन्दोहैः = समूहैः, संकुलस्य = व्याप्तस्य, रक्ताम्बरस्य कञ्चुकी = चोलिका यस्याः सा, कण्ठे = गले, एकयष्टिकाम् = एकावलीम्, नक्षत्रमालाम् = सप्त-विंशतिमुक्तामयी मालिकाम्, विभ्रती धारयन्ती, सिन्दूरचर्चा रहितेन = कुङ्कुमस्पर्श शून्येन, धम्मिल्लनेन = संयतकेशसमूहेन, परिशिष्टम् = अवशि-ष्टम्, पाणिपीड़नम् = विवाहः, इति प्रकटयन्ती = द्योतयन्ती, हस्ते = करे, पाटलिकुसुमस्तवकम् = ईषद्रक्त पुष्पगुच्छम्, एकम्, आदाय = गृहीत्वा, शनैः शनैः भ्रामयन्ती, तमेव च — गुच्छम् अवलोकयन्ती = पश्यन्ती, अविदि-तम् = अज्ञातं, बहुलं = अधिकं, तानतारतम्यम् = तानोत्कर्षपिकर्षौ, यस्मिन्,

तत्, मन्दम् मन्दम् = शनैः शनैः, मुग्धं मुग्धं = मधुरं मधुरं, किञ्चित् गायतीति = गानं करोतीति ।

अत्र गद्ये आदौ प्रतीपालंकारः ।

पृष्ठ—193. भगवन् ! प्रणम्य भगवन्तं—

**सन्दर्भ** :—रघुवीर सिंहः देवशर्माणं पण्डितं प्रणम्य, महाराष्ट्र राजस्य शिववीरस्य, वाचिकं सन्देशं निवेदयति भगवन् इत्यादि ।

**व्याख्या** :—भगवन् = श्रीमन्, तत्र भवान् = श्रीमान्, महाराष्ट्र राजः- = शिववीरः, भवन्तम् = श्रीमन्तम् प्रणम्य = नत्वा, कथयति = निवेदयति, यत् साम्प्रतं = अधुना, शास्तिखानद्वारा = यवन सेनापतिना, पुण्यनगरं = पूनेतिनाम्ना प्रसिद्धम्. हस्तितवता = स्वायत्तीकुर्वता, दिल्लीश्वरेण = अवरंगजीवेन, सह = सार्धम्: योद्धुम् = युद्धं कर्तुम् उपक्रान्तम् = तत्परम् भाविनं (अस्ति) परमल्पीयसी, अस्मत्सेना, = अस्मच्चमू, पार्श्वस्थ पृथिवी पतयः = निकटस्थ भूमिपालाः, असहयोगिनः = असहाय्यकारिणः, परिपन्थिनः = शत्रोः, समुद्धूतध्वजाः = समुल्लसत् पताकाः, अंग वंग कलिंगेषु, तत्तत्प्रदेशेषु (विद्यन्ते), शैशवादेव = बाल्यावस्थाया एव, यवनवराकैः = म्लेच्छविधर्मिभिः, सह = सार्धम्, महाप्रवृद्धम् = अतिशयेन वृद्धिं गतम्, मम = शिववीरस्य, वैरम् = विरोधः (अस्ति) अतः सन्धेः = युद्धविरामस्य, कथामात्रमपि = वार्तापि न सम्बोभवीति = कदापि न भवितुं शक्नोति । यद्यपि अल्पेऽपि स्वल्पेऽपि, मामकाः = मदीयाः, सैनिकाः, युद्धविद्यासु = रणकलांसु, कुशलाः = दक्षाः सन्ति । तथापि = ततोऽपि, किं भावीति किं भविष्यतीति, मध्ये मध्ये = क्षणे क्षणे. मे —मम, संशेते = संशयं कुरुते, हृदयम् = मानसम् । अस्मद्देशे = मम राज्ये, भवान् = श्रीमान् प्रसिद्धः = प्रकाण्डः, दैवज्ञः = ज्योतिर्विद्या-तत्त्वज्ञः, तद् = तस्मात् कारणात्, विचार्य = आलोच्य, कथ्यताम् किं भावीति किं भविष्यतीति ।

इति चतुर्थो निश्वासः

## अथ पञ्चमो निश्वासः

**पृष्ठ—3. अथैकदा रजन्यां सिंह दुर्ग—**

**सन्दर्भ**—एकस्मिन् समये महाराजः शिववीरः सैनिक वेषमाकलय्य रात्री इतस्ततः पर्यटन् प्रजावर्गस्य स्थितिं विलोकयन् शिवमन्दिरं प्राप्तवान्। तत्र धूलिधूसरितमश्वमेकं, भद्रयुवकञ्चावालोकयत। तत्र शिववीरं, अश्वं, तथा भद्रयुवकञ्च विशिनष्टि अथैकदेति।

**व्याख्या**—अथ = तदनन्तरम्, एकदा = एकस्मिन् समये, रजन्यां = निशायाम्, सिंह दुर्गविदूरं एव = सिंहदुर्गात् किञ्चिद्दूरं एव, सुकोमलाः शाद्वलाः = हरितमृदुतृणानि यस्यां तस्यां, कलितः = सम्पन्नः, प्रसादः = नैर्मल्यम् यया तस्यां, केकिनाम् = मयूराणाम्, केकाभिः = वाणीभिः, विहितम् = सम्पादितम्, प्रहरिणाम् = यामिकानाम्, प्रातिनिध्यम् = प्रतिनिधि कर्म यस्यां तस्याम्, भुवि = पृथिव्याम्, निष्कृप = कृपाण पाणिः, निष्कृपः = दयाशून्यः, कृपाणः = असिः, पाणौ = करे यस्य सः, कञ्चुकेन = चोलकेन, आच्छादितः = आवृतः, कठिनः = सुदृढ़ः, कवचः = शरीर त्राणम्, यस्य सः, कलितसैनिक भटवेषः, कलिता धारितः, सैनिक भटस्य देशरक्षकवीरस्य वेषः नेपथ्यम् येन सः, श्री शिववीरो = महाराष्ट्र मण्डलाखण्डलः, गुप्तवेषेण = प्रच्छन्नवेषेण, परितः समन्तात्, पर्यटन् = भ्रमन्, दुग्धधारयेव = क्षीर प्रवाहेणेव, क्षालितैः = धौतैः, ज्योत्स्नया चन्द्रिकया, प्रकाशितैः = प्रद्योतितैः, (उत्प्रेक्षते. पयः प्रवाहेणेव धौतैरिव) पथिभिः = मार्गैः, शिव मन्दिरात् = शिवालयात्, आसन्नात् = समीपात् आरात्, आजगाम = समागतवान्। तत्र = शिवमन्दिर-प्राङ्गणे, द्वारि = प्रमुखद्वारे, रेणुभिः = धूलिभिः, रूषितानि = छुरितानि, रोम-कुहराणि = रोमछिद्राणि यस्य तम्, शफोत्फालितया = खुरोद्धूलितया, मृत्स्नया = प्रशस्तमृदा, स्नातम् = अनुलिप्तम्, त्वरितगतीनाम् = शीघ्र-गमनानाम्, श्वासप्रश्वासानाम् = मुखवायूनाम्, सहचरितेन = सह वासिना,

हिणत्कारेण = ह्रेयारवेण, सूचितः = प्रकटीकृतः वलमः = दूरागमनश्रमः येन, उत्थायोत्थाय = भूयोभूयः उत्थाय, भुवि = पृथिव्याम्, पृष्ठम् = पृष्ठभागम्, उत्कम्प्य = कम्पयित्वा, ग्रीवाम् = गल प्रदेशम्, उद्धूय = प्रकम्प्य, पौनः पुन्येन = भूयोभूयसा पतित्वा, विलुण्ठन्तम् - विलुठनं कुर्वन्तं, कञ्चन = कमपि अश्वम् = बाजिनम् अद्राक्षीत् = दृष्ट्वान् ।

अत्र गद्ये स्वभावोक्तिः उत्प्रेक्षा चालंकाराः ।

**पृष्ठ 6. चिराय दिल्ली वल्लभपाणिपल्लवतल्लजेति ।**

**सन्दर्भ :**—शिववीरः भटवेंषेण परितः पर्यटन्, शिवमन्दिरं समागत्य, मन्दिरपूजकेन सह आलपतः त्यक्तदिल्लीश द्वारस्य कस्यापि, कवेः गवाक्षात् आगच्छन्तम्, आलापध्वनिं शुश्राव । सः कथयति स्म - चिराय दिल्ली वल्लभेत्यादि ।

**व्याख्या**—चिराय = बहुकालं यावत्, दिल्ली वल्लभ पाणिपल्लव तल्लजस्य = दिल्लीपति-कर किसलय प्रशस्तस्य, छायाम् आश्रयम्, अध्युषितोऽस्मि = कृतनिवासोऽस्मि । परं वयं कवयः परन्तु वयं वाङ्मयस्रष्टारः, कस्यापि = व्यक्तिविशेषस्यापि, राज्यत्वम् = ऐश्वर्यमत्वं, प्रतापित्वम् = पराक्रमत्वम्, आढ्यत्वम् = धनिकत्वम्, वा न - नहि अपेक्षामहे = अपेक्षांकुर्मः न वा कस्यापि = जनस्य, साभिमानः अभिमान सहितः, भ्रूभङ्गः = भ्रूविक्षेपः यस्य तम्, उत्तुङ्गकोपेन = विपुलक्रोधेन, अञ्चिताम् भूषिताम्, अखर्वगर्वाम् = अनल्पदर्पाम् । तस्य = भूपतेः, भूवलये - पृथिवीमण्डले, तादृशं = तत् सदृशं, राज्यं = शासनम्, न = नहि (अस्ति) यादृशम् - यत् सदृशम् = अस्माकं = कवीनाम्, सरस्वत्याः इयं, सारस्वती वाग्देवी सा चासौ सृष्टिः = सर्गः, तस्याम्, सारस्वतसृष्टौ (राज्यं शासनमस्तीति) । तस्य = राज्ञः क्रीतदासाः = स्वाधीनीकृताः भृत्याः, तदीहा समकालम् = तदिच्छा समसमयम् एव, बद्धकरसंपुटाः = प्राञ्जलयः सन्तः, यथोचितावस्थानाः = समुचितस्थानेयः, स्थितः पुरोऽवतिष्ठन्तः = सम्मुखे समुपस्थिता भवन्ति, यथा यादृशम् अस्माकं = कवीनाम्, पदानि = सुबन्तति-

ङन्तानि च वाक्यानि = सुवन्तचयाः तिङन्तचयाश्च, पुरोऽवतिष्ठन्ते = सम्मुखे समुपस्थिता भवन्ति, यथा यादृशम् अस्माकं = कवीनाम्, पदानि सुबन्तानि तिङन्तानि च, वाक्यानि = सुबन्तचयाः तिङन्तचयाश्च, छन्दाँसि = वृत्तानि, अलंकाराः = काव्यभूषणानि शोभावर्द्धकाः उपमादयः, रीतयः = वैदर्भीप्रभृतयः, गुणा माधुर्यादयः, रसाः = शृंगारादयाश्च, स राज्ञा दीनार-सम्भारैरपि = सुवर्णमुद्रा-कोटिभिरपि न तथा = तेन प्रकारेण, परान् जनान्, तोषयितुं = प्रसादयितुम्, अलम् = समर्थाः, यथा—येन-प्रकारेण, वयं = कवयः, वचन भांगिभिरेव = कवित्वप्रयुक्तकथनैरेव तोषयितुम् समर्था स्मः । अस्माकं = कवीनाम् शृंगार रस एव, रसायनकम् = सर्वश्रेष्ठमोषधि विशेषम्, तमास्वाद्य = तस्यास्वादनं विधाय, जितौ रागद्वेषौ = विषयाभिलाषशत्रुत्वे च येन तादृशः मुनिरपि = मननशीलोऽपि, प्रतीपदर्शिनीम् प्रतीपम् द्रष्टुं शीलं यस्याः ताम्, प्रतीपदर्शिनीम् = स्त्रियम्, अनुकूलयितुम् = वशयितुम्, आकुलः = व्याकुलः, कल्पते = भवति । अस्माकम् = कवीनाम्, वैराग्यकविताम् = वैराग्योत्पादक पद्यानि, आकर्ण्य = श्रुत्वा, रागोऽपि = विषयाभिलाषोऽपि, विरज्येत् = विरागमागच्छेत् । अस्माकम् = कवीनाम्, वीररस-कविताम् आकलय्य = पठित्वा, म्रियमाणोऽपि = प्राणाँस्त्यजन्नपि, युद्ध = युद्धार्थम्, उत्तिष्ठेत् = उत्थितो भवेत् इति । अत्र गद्ये = आदौ अनुप्रासः, मध्ये च स्वभावोक्तिः अलंकारः अस्ति ।

**पृष्ठ—14. अस्तमिते———सहैवमालपत् ।**

अस्तमिते = अस्ताचलं प्राप्ते, भगवति = ऐश्वर्यशालिनि, मरीचिमालिनि = अंशुस्वामिनि, अन्धकारेण = तमसा, व्याप्तासु = समाच्छादितासु, हरित्सु दिक्षु, किञ्चित्, किञ्चित्, चमत्कुर्वत्सु = दीव्यत्सु, नक्षत्रेषु = खद्योतकुलेषु, शिववीरेण, अध्युषितचरस्य = कृतनिवासचरस्य, महाप्रसादस्य = राजभवनस्य अट्टालिकायाम् = तलिन्याम्, आत्मीयैः = स्वीयैः = स्वजनैर्वा, शास्तिखानः, समुपविष्टोऽस्ति = स्थितोऽस्ति । परितश्च = सर्वतश्च, अनेके = बहवः योद्धारः = युद्धे युञ्जानाः बलवन्तः, मौद्गला = मौद्गल्याः, पर्यवातिष्ठन्त = परितः स्थिता आसन् । परितः = सर्वतः, दीपमाला दीपावली, चकास्ति = दीव्यति । पुष्पवाटिकाभ्यश्च = पुष्पाणां

यान्युपवनानि तेभ्यश्च, प्रस्फुटताम् = हर्षताम् अतिमुक्तकुसुमानाम् = माधवीसुमनानाम्, सौरभम्, = सुगन्धिम्, आदाय = गृहीत्वा, धीरः = मन्दः, समीरःपवनः प्रवहति = नुदति । शास्तिखानस्तु, महदुपधानम् = महदुपवर्हम् पृष्ठेन = स्वशरीरपश्चभागेन । आक्रम्य = निपीड्य. सम्मुखस्थस्य = पुरः स्थापितस्य, रत्नजटितस्य = हीरकादिखचितस्य, धूम्रपानयन्त्रस्य = हुक्का इति लोकाख्यातस्य, नलिकाम् = प्रवाहिकाम् 'नली' इति लोके ख्यातम्, ताँ हस्ते = पाणौ, दधत् = गृह्णन्, मध्ये च = वचनश्रवणान्तराले, च यूथिकाकोरकाणाम् = माधवीकलिकानाम्, पङ्क्तिभिः = राजिभिः, परिवेष्टितायाः = सर्वतोभूषितायाः, नलिकाग्रतः, सगुडगुडाशब्दं = 'गुडगुड' इति शब्दानुकरण सहितम्. ताम्रकधूमम्—तम्वाकू' इति ख्यातस्य धूमम्, आकर्षन् = स्व अन्तः विगृह्यमाणः, पार्श्वस्थात् = समीपे तिष्ठतः ताम्बूल-वाहकहस्तात्, वीटिकामपि = ताम्बूलीदलीमपि, गृह्णन् = प्राप्नुवन्, उशीरजलेन = नलदाम्भसा, सिक्तस्य = आर्द्रीकृतस्य व्यजनस्य वातैः = पवनैः, वीज्यमानः = सेव्यमानः, परितः = सर्वतः, संस्थापितेषु = निहितेषु सतोयेषु = पानीययुतेषु, भाजनेषु = पात्रेषु, स्थितैः = तिष्ठद्भिः कुसुमस्त-बकैः = पुष्पगुच्छैः, सुरभिक्रियमाणः = सुगन्धिभिः—युज्यमानः, केनचन = केनापि, कार्यवाहेण = कृत्यसम्पादकेन, सह = समम्, एवम्, आलपत् = वार्तामकरोत् ।

**पृष्ठ—21. आसीत्———इत्यालपत् ।**

तत्र = शास्तिखान सभायाम्, एको वृद्धः = कश्चित् चतुर्थाश्रमायुः सेवी, वीरः = योद्धा, चान्द्रखान नामा = 'चाँदखाँ' इतिनाम्ना प्रसिद्धः, उपविष्टः आसीत् = स्थितः आसीत् । स तु = सः चान्द्रखानस्तु, केवलं-रोचकम् = मात्ररुचिकरम, इदं = एतद्, मिथ्याप्रशंसनम् = साररहितप्रवादान्, आकर्ण्य = श्रुत्वा, कर्णयोः = श्रोत्रयोः, तोद्यमान इव = पीड्यमान इव, ग्रीवामाकुञ्च्य = गलमविस्तीर्य एव, भ्रूयुगं = भ्रूयुगलम्, सन्नमय्य = नीचैः कृत्वा, ओष्ठयुगम् = द्वावेव ओष्ठौ, कम्पयन् = स्फुरयन् मनस्येव = चेतस्येव, "धिगेताँश्चाटुकारान्हतकान्" = "मात्रमिथ्यालापिनः दुष्टानेतान् धिगस्ति" ये = चाटुकाराः, प्रशंसाभिः = मात्रशुभभाषणैः एव, प्रभूनन्धयन्ति = स्वामिनोऽज्ञानान्धतमसि पातयन्ति अर्थादतथ्यैः स्वामिहृदयं

सिञ्चन्ति । महाराष्ट्राणाम् = महाराष्ट्रदेशीयानाम्, हृदये = चित्ते शिवस्य = शिवराजस्य, तिरस्कारजन्या = अपमानोद्भूता, ज्वाला = अग्निः, प्रतिक्षणम् = प्रतिसमयम्, अधिकम् = भृशम्, जाज्वल्यते = प्रज्वलितो भवति । गानेषु = गीतेषु, पानेषु = पेयपदार्थेषु, नृत्येषु = अङ्गविक्षेपेषु, कुकृत्येषु = दुष्कार्येषु च, अस्मत्सजातीया एव = अस्मज्जातीयाः यवना एव, सह = समम्, युञ्जते = योगंवहन्तेः, = नतु = नहि तु, महाराष्ट्र-सिंहाः = महाराष्ट्रदेशीयाः केशरिणः । यावदारभ्य = यस्मात् कालात्, चिक्कनदुर्गः —'चाकन' इति नामप्रसिद्धप्रासादः, अस्माभिः = शास्तिखानसहचरैः, गृहीतः = प्राप्तः, तावदारभ्य = तस्मात् प्रभृति. महाराष्ट्र-बालकोऽपि = महाराष्ट्रवासि बालोऽपि, अस्मान् = यवनान्, चिचर्वयिषुरिव = चर्वयितुमिच्छुरिव, सभ्रुकुटि = भ्रुवौ कुटिलौ कृत्वा, पश्यति = अवलोकते, तु, । अधीनः = यवनाधीनोऽहमिति, मत्वा, बिभेति = भयभीतो न भवति, पर्वतप्रायस्य = शिखरि बहुलस्य कोङ्कणदेशस्य = कोङ्कणनामप्रदेशस्य एते = इमे केशरिणः = सिंहाः, 'सन्ति' इति शेषः । को जानीते = केनापि न ज्ञायते, यत्, कदा = कस्मिन् काले, आक्रम्य = आक्रमणं कृत्वा, अस्मान् = यवनान्, कर्तयित्वा = विच्छेद्य, क्रव्यादेभ्यः = माँसभक्षकेभ्यः, विकिरिष्यन्ति = करीष्यन्ति हास्यन्ति वा, परन्तु, कृतघ्नाः = अनुपकारिणः, एते = इमेऽस्मत्सहयोगिनः यवनाः, मिथ्याप्रलापैः = अपलापैः, एव, चमूपतिम् = सेनापतिम्, वञ्चयन्ति = अकिञ्चनं कुर्वन्ति, इत्यालपत् = इत्येवमवदत् समभाणी वा ।

**पृष्ठ 27. चमूपते———न करिष्यन्ति ।**

चमूपते = सेनापते !, दुर्गाण्येव = राजमन्दिराण्येव, महाराष्ट्राणाम् = महाराष्ट्रवासिनाम्, बलानि = शक्तयः, सन्ति । प्रायः = बाहुल्येन, ते = महाराष्ट्रवीराः, व्यर्थमिति मत्वा = लाभरहितमिदमिति विज्ञाय, कमपि, कमपि, प्रशस्तम् = सम्पन्नम्, भूभागम् = भूभण्डम्, रणाङ्गणीकृत्य = समराङ्गणं मन्यमानाः, तथा च ध्वजान् = पताकान् समुद्धूय = समुत्तोल्य, भेरीराहत्य = भेरीनादं कृत्वा, न योत्स्यन्ते = युद्धं न करिष्यन्ति । किन्तु, परितः = सर्वतः, पर्वतदरीषु = पर्वतगुहासु, महारण्येषु =

सुदीर्घारण्येषु, गिरिगणावृतेषु = भूधरनिकराच्छादितेषु, दुर्गेषु = सैनिकावासेषु, निर्भया = भीतिरहिताः, अवस्थास्यन्ते = वत्स्यन्ति । अस्माँश्च = शास्तिखानसहायक यवनान्, च यदा, कदाचिदेव = अकस्मादेव (कस्मिन्नपि समये, असावधनान् = प्रमत्तान्, आकलय्य = संलक्ष्य, पशुमारमारयिष्यन्ति = पशून, यथा हनिष्यन्ति तथैव अस्मानपि हिंसिष्यन्ति, इत्येवमविज्ञाय, शनैः शनैः = असहसैव, एकैकदुर्गग्रहणाय = एकानन्तरमेकं दुर्गं प्राप्त्यर्थम्, एव, उद्योगः = प्रयत्नः, करणीयः = विधातव्यः इति = एवंभूता, मे = चन्द्रखानस्य, मतिः = सम्मतिः वर्तते । सम्मुखं च = पुरतश्च, युद्धाय = समराय, उपस्थिताः = अग्रे भवन्तः, अपि, पलायिष्यन्ते = पराङ्मुखाः भवन्तः धाविष्यन्ति, चेद् = यदि, उच्चावच्चोपत्यकासु = निम्नोन्नतपर्वतसमीपस्थभूमिषु, गण्डशैलमयेषु = गिरिच्युतस्थलशिलामयेषु निबिडारण्येषु = सघनवनेषु, कुज्झटिकासु = दुरवगाहनीयभूमिषु, दुरूहारोहावरोहपद्धतिषु = कठिनोर्ध्वाधोगमनमार्गेषु, सानुषु च = स्नुषु च, तेषाम् = महाराष्ट्रियोद्धानाम्, कथामात्रमपि = कथाशेषमपि, न = नहि, अस्माभिः शास्तिखानसहचरैः सैनिकैः, प्राप्स्यते = लप्स्यते ।

शास्तिखानस्तु, चिक्कनदुर्गम् = चिक्कननामविख्यात राजमन्दिरम्, अधिकारयुद्धस्मरणेन = अधिकुर्वति समये यादृशं युद्धं कृतवानिति तत्स्मरणेन, हतहृदयः = हतोत्साहः, पुनस्तादृशम्, रोमहर्षणम् = लोमविक्षोभकम्, युद्धम् = समरम्, अविधित्सु = न कर्तुमिच्छुरिति, कातरतरान्तरात्मा = कातरतरः = अत्यन्तत्रस्तः आत्मा यस्य सः शास्तिखानः, समुवाच = अवादीत् । महाराष्ट्राः = शिववीरस्य सेनानिनः, युद्धक्षेत्रम् = समराङ्गम्, अपास्य = त्यक्त्वा, पलायिष्यन्ते = पलायमानाः भविष्यन्तीति, चेद = यदि, तर्हि, किम्, अस्माकीनाः = योद्धारः, नहि, अनुधाविष्यन्ति = महाराष्ट्राननुद्रास्यन्ति ? ते = शिवराजसैनिकाः, किम्, घोटकानाम् = हयानाम्, खुराणाम् = शफानाम्, खडखडेत्यव्यक्तानाम् शब्दानाम्, श्रवणेन = श्रोत्रगोचरेण, एव, अर्द्धमृतप्रायान् = गतार्धासून्, कन्दरिकन्दरेषु = पर्वतगर्भेषु अर्धप्रविष्टान् = शरीरार्धभाजेनाध्तर्गतान्, शक्तिप्रोतान् = 'शक्ति' इतिनामविशेषास्त्रविद्धान, नहि करिष्यन्ति ।

**पृष्ठ (29) चमूपते । अस्माकं स्थूलकाया इत्यादि ।**

**सन्दर्भ**—यवनसेनासु नीतिनिपुणः चान्द्रखाननामा एकः सैनिकः यदा यवन-सेनापतिः शास्तिखानः निजसभाम् इष्टमित्रैः अनुचरैः चाटुकारैः सैनिकैश्च सह संग्राम विषयकं परामर्शं करोति स्म तदा चान्द्रखानः सम्मुखं युद्धं निषेधयन् स्वाभिप्रायं निवेदयति- चमूपते—इत्यादि ।

**व्याख्या**—चमूपते = सेनापते, अस्माकं = यवनानाम्, स्थूलः कायः = स्थूलं शरीरं येषां ते स्थूलकायाः = महाकायाः सरलभूभागमात्रेषु = समतल भूमि प्रदेशेषु, धावनस्य = त्वरितगत्या गमनस्य अभ्यासः = येषां ते सरल भू-भाग मात्र धावनाभ्यासिनः = समतल भूमिषु धावनदक्षाः, हयाः = घोटकाः, तदुपरि—अश्वेषु महाकवचाः = विशाल-तनुत्राणाः, शस्त्रास्त्रमहाभारभृतः = अस्त्रशस्त्रयोः अतिभारधारिणः, सादिनः = अश्वारोहाः, (सन्ति) अतः ते सादिनः उद्घातिनीषु = स्खलन योग्यासु, उपत्यकासु = अद्रेरधः सन्निहित भूमिषु, तथा = तेन प्रकारेण, अश्वान् = घोटकान्-चालयितुं न शक्नुवन्ति—न समर्थाः सन्ति, यथा = येन प्रकारेण, महाराष्ट्राः = कोङ्कण प्रदेशीयाः, लघुभिः, पार्वतघोटकैः = पर्वतीय-अश्वैः उन्दुरव इव = मूषका इव, कुहरेषु = पर्वत गुहासु, निविशन्ति = प्रविशन्ति, मर्कटा इव = वानरा इव, सानुमत्सानूनि = शैल-शिखरान्, आरोहन्ति = उपरि गच्छन्ति । पक्षिण इव = विहंगमा इव, उपत्यकात उपत्यकाम् = शैल-शिखरात् शैल-शिखरम्, उड्डीयेव गच्छन्ति = व्रजन्ति । शशा इव च = शशका इव च सपदि = शीघ्रम्, तरुल-तासु = वृक्षवल्लीषु, आत्मानम् = स्वात्मानम्, आच्छाद्य = आवार्य, तिष्ठन्ति = स्थिताः भवन्ति । तत् = तस्मात् कारणात्, सपदि = शीघ्रम्, सेना आयोज्य = संघटय्य, सिंहदुर्गे एक अश्वधानीयः = अश्वैराक्रमणीयः । तस्मिन्नेव सिंह दुर्गे शिवोऽस्ति = महाराष्ट्रराजः निवसति, मासेन मासद्वयेन वा = मासद्विमास काल परिमाणेन एतद् दुर्गम् = सिंह-दुर्गं हस्तगतं भविष्यति = तं वशयितुं शक्तुमः । शिवश्च = महाराष्ट्र राजश्च, बन्दी करिष्यते = विग्रहीष्यते । दिल्लीश्वरस्य = अवरंगजीवस्य, विजय-पताकाः = विजय-ध्वजाः, सर्वत्रापि कोङ्कणप्रदेशे, दोधूयिष्यन्ते = समुड्डयिष्यन्ते, मम =

चान्द्रखानस्य = तुच्छा, बुद्धिः = मतिः, इदमेव अध्यवस्यति = निश्चिनोति, श्रीमते = भवते यथा रोचेत तथा विधेयम् = कार्यम् ।

अत्र गद्ये — उत्प्रेक्षा उपमा चालङ्कारः ।

## इति पञ्चमो निश्वासः

## अथ षष्ठो निश्वासः

**पृष्ठ :—56. अहह ! ग्रहाः एव प्रतिकूला विधिरेव——**

**सन्दर्भ :**—शिववीरस्य परममित्रम् माल्यश्रीक नामास्ति । सः एकदा यवन यति-वेषमाकलय्य शत्रु-भवनं प्रविष्टः । तत्र घण्टापथस्य प्रान्तस्थायामेकस्यां वेदिकायाम् उपविश्य मुखमधःकृत्य तूष्णीकः समतिष्ठत । तथा स्थितस्य तस्य हृदये विचारतरङ्गाः प्रादुरभूवन् । स्वगतमेव सः विचारयितुमारेभे = अहह ! ग्रहा एवेत्यादि ।

**व्याख्या**—अहह ! हा हन्त ? भारतवर्षस्य = आर्यावर्तदेशस्य, ग्रहाः एव शनैश्चरादयः प्रतिकूलाः, = विपरीताः, विधिः = दैवम् एव कुटिलः, समयः = कालः एव, अशुभकरः = अमंगलः, अदृष्टम् = भागधेयम् एव, निकृष्टम् = अशुभफलदायकम्, । भवित्र्यमेव = अवश्यंभावि एव, निन्दितव्यम् = निन्दनीयम्, अन्यथा = यदि एवं न स्यात् तदा राजपत्राणाम्, बालस्यापि शिशोरपि, क्रीडाचन्द्रहासचमत्कारम् = लीलाखड्ग संचालन कौतुकम्, सोढुम् = सहनं कर्तुम् अलम् = समर्थः (स्यात्) परन्तु अस्मद्देशीयानाम् निजदेशवासिराजपुत्राणाम्, ऐक्यमेव = संघातः एव, न भवति न जायते । यदि नाम = मन्ये भारताभिजन वीर-वराः = भारतीय भट-श्रेष्ठाः, सहयुञ्जेरन् = एकतां कुर्युः, तद् वयम् = भारतीयाः पारावारमपि = समुद्रमपि, मरुकुर्मः = शुष्कतामापादयामः । बन्धुभिरपि —सौदर्यैरपि, कृतवैरस्य = विहित वैरभावस्य, महानीचस्य = अतिशय कृतघ्नस्य, एतस्य = यवनस्य, मर्दनम् — नाशनम् को नाम कठिनो व्यापारः ? परन्तु राज-पुत्र देशीयमहाराजानाम् = राजपूतानेतिप्रसिद्ध शासकानाम्, अन्यतमः = प्रमुखः, अयं प्रधानः वीरः = श्रेष्ठः वीरः, महाराजो, मरुधराधीश्वरः मरु = प्रदेशशासकः, यवनानामेव = म्लेच्छानामेव, पार्श्वग्राहकताम् = पक्षपातिताम्, अंगीकृत्य = स्वीकृत्य, अस्माभिरेव = महाराष्ट्रैः

सह योद्धुम् = संग्रामं कर्तुं, ध्वजानुद्धूय = पताकानुत्थाप्य, पुण्यनगरस्य = पूनेति ख्यात नगरस्य, नेदीयस्येव = समीपस्थ एव प्रकाणड भूभागे = विशाल प्रदेशे, शिविराणि = उपकारिकाः अधितिष्ठति = अध्यास्ते । राजपुत्र गणानाम् = निखिलक्षत्रियाणाम्, शिरोमणिः = शिरोभूषणः, आमेर देशाधीशः = अजमेरेति प्रसिद्ध प्रदेश शासकः, दिल्लीश्वरस्येव = अवरंगजीवस्य पृष्ठपोषकः = साहाय्यकारी विद्यते । अयोध्या प्रान्तस्थाः = साकेत प्रान्त वास्तव्याः, क्षत्रिय केशरिणः = क्षत्रिय सिंहाः पूर्णतया, = सम्पूर्णतः, परवन्तः = परतन्त्राः, संवृत्ताः = जाताः इति श्रूयते । कोंकणदेशे तु = महाराष्ट्र-प्रदेशे तु, विजयपुरादीनाम् प्रधानतमस्थानानाम् = प्रमुखस्थानानाम्, यवना एव अध्यक्षाः प्रधानः वंगदेशे तु = बंगाल प्रदेशे तु प्रायः क्षत्रियाः एव न सन्ति । सन्तोऽपि युद्धविद्याँ = संग्रामकलां न जानन्ति । केवलम् एकः आयुष्मान् – चिरंजीवी, शिववीर एव धर्मे = सनातन धर्मे एतम्, बलात्का-रम् = धर्मध्वंसनम्, असहमानः = सोढुम् अशक्तः, सर्वदा = सर्वस्मिन्काले, यवनैः म्लेच्छैः सह युद्धाय, सज्जः तिष्ठति = तत्परोऽस्ति ; एतस्य = शिवस्य, परमात्मनः, ऋते = ईश्वरं बिना न कोऽपि साहाय्यं सहायतां विदधाति = करोति ।

**पृष्ठ 58. हन्त भगवन् ! महति दुराचारे—**

**सन्दर्भ**—यवन-यति-वेषधारी शिववीर-सहचरः माल्यश्रीकः देशस्य जनतायाः दुरवस्थां विलोक्य, ईवरमुपालभमानः परमात्मानं गीतो-क्त वचनं स्मारयति हन्त भगवन् इत्यादि ।

**व्याख्या**—हन्त—खेदे, भगवन् = परमात्मन्, महति = भयंकरे, दुराचारे = पापे, प्रवृत्ते = जाते सति = मानवलोके, अवतरामि = गृहीतदेहो भवामि इति गीतायाम्, प्रतिज्ञातवानसि = प्रतिज्ञां कृतवानसि, तत् इतोऽपि अधिकम् = अनल्पम्, दुराचारम् = पापम् कुकर्मं, वा उपेक्षसे = उपेक्षां करोषि । अहह = खेदे, परस्कोटयः = कोट्यधिकाः मूर्तयः = देव प्रतिमाः भज्यन्ते । असंख्यानि = अगणितानि, मन्दिराणि = मठानि, भूमिसात्क्रियन्ते = धूलिसात् विधीयन्ते । राशीकृतानि = एकत्रीकृतानि, वेदादि पुस्तकानि = वेदादि ग्रन्थाः, ज्वाला-जालैः = वन्हि-ज्वालामालाभिः, ज्वाल्यन्ते = दह्यन्ते ।

कुलीनानाम् = उच्चवंशोद्भवानाम्, कन्यकाः = बालिकाः कदर्य-हतकैः = निष्ठुर यवनैः, कुत्सिताभिप्रायेण = बलात्कार-करणाभिलाषेण, बलात् = हठात्, आच्छिद्यन्ते = अपह्रियन्ते । शिरच्छेदानाम् = मस्तक कर्तनानाम्, नयनोत्पाटनानाम् = नेत्रनिष्कासनानाम्, करकर्तनानाम् पाणिखण्डनानाम, जिह्वाकर्षणानाम् = रसनाकर्षणानाम् = उदर-विदारणानाम् = शूलारोपणानाम् च, क्रीडा इव = खेला इव, क्रियन्ते = विधीयन्ते । याः प्रजाः = जनताः, पूर्वैः = प्राचीनैः, राजभिः = शासकैः, औरस प्रजा इव = स्वोत्पन्न-सन्तानानि-इव, प्राणाधिक प्रेम्णा = प्राणातिशयानुरागेण, समापाल्यन्त = पालिताः, ता एव प्रजाः अधुना = सम्प्रति, निरर्थम् = व्यर्थम्, निर्दयं = दया रहितम्, लुण्ठ्यन्ते = पात्यन्ते, घात्यन्ते ज्वाल्यन्ते = अग्निसात् क्रियन्ते च ।

अत्र गद्ये उपमालंकारः ।

**पृष्ठ = भगवन् यः क्षत्रियता याः धूर्धरः इत्यादि——**

**सन्दर्भ :**—महादेव पण्डित वेषधारी शिववीरः दूतताच्छलेन, यशस्विसिंहस्य शिविरं गत्वा महाराष्ट्र-राजस्य गौरवं प्रकटयन् कथयति-भगवन् इति ।

**व्याख्या :**—भगवन् = श्रीमन्, यः क्षत्रियतायाः = क्षात्रस्य, निखिलः विपन्नः रूपरक्षणम्-धुरम् = भारम् धारयतीति धुरः, येन = क्षत्रिय-जातिना, इयम् = एषा, भूः = पृथ्वी, राजयन्ती = सुराजवती, (कथ्यते स्म) यः = क्षत्रियः, अस्मादृशानाम् = मत्सदृशानाम्, अभिमानभाजनम् = दृढगर्वपात्रम्, यस्मिन् = राजनि (सति), धर्मधुरन्धरा = धार्मिकः, आग्रह-ग्रहिलाः = धर्मपक्षपातिनः, यम् = क्षत्रिय-राजानम्, पीयूष-पूरमिव = अमृतप्रवाहमिव, चिराय = चिरकालाय, चक्षुश्चषकैः = पान-पात्रतां गतैः नयनैः पिपासामहे, यः = क्षत्रियः, सनातनधर्मरक्षायाः = वैदिक धर्मसंरक्षणस्य, एकमात्रम् = अद्वितीयम्, शरणम् = आश्रयः, यश्च = क्षत्रियः, हिन्दुवीरशूरसमूहस्य, मुकुटमणिः = मस्तकरत्नम्, तमेव = क्षत्रियम्, अद्य = सम्प्रति, कदर्यहतकानाम् = निष्ठुरयवनानां, पाटचराणाम् = चौराणाम्, जाल्मानाम् = धूर्तानाम्, धर्मध्वंसिनाम् = धर्मविनाशकानाम्, अवरङ्गजीवादीनाम् दासपदता लाञ्छनम् = भृत्याकलङ्कापयशः

चिह्नितम्, आलोक्य = विलोक्य, महाराष्ट्रराजः = शिववीरः, शोकाकुलः = दुःख व्याकुलः शुचाचान्तः (अस्ति)

अत्र गद्ये रूपकालंकारः ।

**पृ० 67. गाढोऽयम्———चापजहार ।**

गाढः = घनीभूतः, अयम् = एषः, अन्धकारः = तमोराशिः, कज्जलस्य = अञ्जनस्य रेणुपटलमिव = धूलिसमूहमिव, सर्वतः = सर्वासु एव दिक्षु, उड्डीयते उद्धूयमाना अस्ति । गगनम् = आकाशम्, मसीमिव = कालिमामिव, वर्षति = वर्षां करोति । महादेवस्तु, परिचितम् = पूर्वज्ञातम्, सकलम् = समस्तम्, पुण्यनगरं = नामविशिष्टस्य, मार्गजालम् = वर्त्मसमूहो येन सः महादेवः, वीथिकान्तरम् = पथिषु मध्ये प्रविष्टः = अविशत् । पूर्वम् = अस्मात्पूर्वम्, पूर्णतया = पूर्णरूपेण, पर्य्यटितचरम् = इदं नगरम् एतत्पूनानामनगरम्, इति = अत एव, अन्धतमसेऽपि = गहनान्धकारेऽपि, सुखेन = सुखपूर्वकम्, पर्य्यटितुमशकत् = भ्रमितुं समर्थोऽभूत् । तत्र = अस्यां प्रतोलिका-सम्बन्धिनि, एकस्मिन् गृहे = गृहस्थ्यावासे, गवाक्षे = वातायने, एको दीपः = दीपकः, मन्दं मन्दम् = धीरं धीरम्, ज्वलति = प्रकाशते । तस्मिन् = तद्दीपकसम्बन्धिनि, अवतमसे = क्षीणान्धकारे, तत एव = तं प्रत्येव, गच्छन् = गमनं कुर्वन्, तद्द्वारसम्मुखे = तद्गृहद्वाराग्रतः, द्वारवेदिकायाम् = द्वारमञ्चे, पुञ्जीभूतम् = एकत्रीभूतम्, अन्धकारमिव = तमसः राशिमिव, मूर्च्छितम् = असंविज्ञम्, भल्लूकमिव = ऋक्षमिव सुप्तम् = स्वप्न-स्थिति-प्राप्तम्, वायससमूहमिव = काकनिकरमिव, राशीकृतम् = एकत्रीकृतम् कृष्णसर्पसङ्घातमिव = कालसर्पसमूहमिव, आकुञ्च्य = मोटयित्वा, स्थापितम् = आरोपितम्, कृष्णकम्बलमिव = कालोर्णवस्त्रविशेषमिव, च किमपि = वस्तु, श्यामश्यामम् = कालकालम्, अद्राक्षीत् = आलोकयत् । निकटे = समीपे, आगत्य = एत्य, निपुणम् = सावधानम्, निरीक्षमाणः = पश्यन्, च, दृष्टवान् = अद्राक्षीत यत्, प्रहरी = यामिकः स्वपिति = शेते, दिल्लीशस्य = दिल्लीस्वामिनः, नाम्नाङ्किता = चिन्हिता, रजतपट्टिका = रौप्यफलकम्, तेन भूषितम् = सुशोभितम्, तस्य = प्रहरिणः, उष्णीषम् = शिरस्कम्, एकतः = एकस्मिन् पार्श्वे, अर्धस्खलितम् = अर्धभ्रष्टम्, विशीर्यते = विकीर्यते, उपानदेका = पादुकैका, वेदिकाप्रान्त-

लम्बितपादात् = पदः, च्युता = पतिता, अधः = नीचैः, पतिता आसीत्, मुखात् = आस्यात्, निर्गताभिः = निस्सृताभिः, लालाभिः = सृणिकाभिः, सिक्तः = लिप्तः, बाहुः = दोः, तथा धूलिधूसरितानि = रजोमिश्राणि, नीचवसनानि = नीलवस्त्राणि, च, स्वेदैः = घर्मजलैः, आक्लिद्यन्ते = आर्द्रीक्रियन्ते, तदालोक्य = तद्दृष्ट्वा, किञ्चित् = किमपि, हसन्निव = विस्माययन्, इव, महादेवः, "मूर्खोऽयम् = गतसंज्ञोऽयम्, यातैकयासायाम् = व्यतीतैकप्रहरायाम् एव, यामिन्याम् = रात्रौ, सुप्त; = शयितः" इत्येवम्, मनस्येव = चेतस्येव, उक्त्वा = कथयित्वा, शनैः तस्य = प्रहरिकस्य, उष्णीषम् = शिरस्कम् खड्गम् = असिम्, च अपजहार = हृतवान् ।

**पृष्ठ 81 समायातम्——दिधक्षामः**

समायातम् = समागतम्, घोरम् = भीषणम्, कलियुगम् = कलितन्त्रविशिष्टं युगम्, नात्र जह्नि = अस्मिन् विषये, संशयः = तर्कः प्रवेशोऽस्ति यैराततायिहतकैः = यैःवधोद्यताः म्लेच्छैः, दृशाऽप्यवलोकितम् = चक्षुषाऽपि दृष्टम् अन्नादि = भोज्जयपदार्थादिः, अस्मत्पूर्वजैः = अस्मत्-पूर्व पितृगणैः, शुनकेभ्यः, = कुक्कुरेभ्यः, वितीर्णम् प्रदत्तम्, ते = दुष्टयवनाः, अधुना सम्प्रति, साञ्जलिः = करसुम्पटेन नमस्क्रिय-माणाः, जयजयध्वनि पुरस्सरम् = जयकारे शब्द पूर्वकम्, अभिवाद्यन्ते = नमस्क्रियन्ते, येभ्यः = यवनहतकेभ्यः, चर्मकारमण्डलेषु = पादुकारसमुदायेषु, वासभूमिः = आवासभूः, अदीयत = प्रदत्ताः, तेषाम् = म्लेच्छानाम् विजय-पताकाः = विजयकेतवः, अधुना = सम्प्रति वङ्गकलिङ्गप्रभृतिषु च, दोधूयन्ते = समुद्धूयमानाः सन्ति । ये = यवनाः अस्मदिष्टदेवनिन्दकाः = नः इन्द्राग्न्यादिनिन्दारताः, सजिह्वोच्छेदम् = सरसनोत्कर्तनम्, अस्माभिः = आर्यैः राज्याद् = देशात् निरवासिषत = निस्सारिताः; किन्तु, ते = म्लेच्छाः अद्य = अधुना, जीवतामेव = जीवितं धारयन्त एव, अस्माकं काश्यादिषु = अस्मद्काश्यादिषु नगरीषु, मन्दिराणि = पूजास्थानानि, मर्दयन्ति = नष्ट-यन्ति, तीर्थानि = तीर्थस्थलानि, आपानभूमी कुर्वन्ति = सुरापानशाली कुर्वन्ति, कमला इव = श्रिया इव, विमलाचाराः = पवित्राचारशालिनीः, कुलीनकन्या = सद्वंशोत्पन्नाविवाहिताः बालिकाः, कदर्थयन्ति हीनं

कुर्वन्ति । सगात्रकम्पम् = सशरीरवेपनम् साश्रुपातनम् = सनेत्रजल = निस्सरणम्, "त्रायस्व—त्रायस्व" = पाहि-पाहि, इत्येवम् आम्रेडन-पराणाम् = अनुवारंवदताम्, परमपूज्यपादानाम् = अतिसत्कार्यचरणनाम्, वेदविदुषामपि = वेदविदामपि, शोणितैः = रक्तैः, भुवम् = पृथिवीम्, शोणयन्ति = रक्तीकुर्वन्ति । अहह ! = महत्कष्टम्, अस्मादृशान्, क्षत्रिय-कुलकलङ्कान् = क्षात्रधर्मवंशकलङ्कान्; ये तु वयम्, तेषां = मानवाकाराणाम् = मनुष्य शरीर धारिणाम् = मांसभक्षिणाम्, रुधिरैः = शोणितैः, देवान् = देवताः, पितृंश्च, न तर्पयामः = प्रीणीमः, अपितु, तेषाम् = म्लेच्छानाम् साहाय्यदानेन = सहायताकरणेन, स्वधर्मरक्षणपरान् = स्वधर्मसेवकान् स्वबन्धूनेव = देशभ्रातृनेव, चिक्लेशयिषामः = सन्तापयितु-मिच्छामः । हा ! = क्षोभम् सर्वोऽपि = अखिलोऽपि, अस्मद्देशः = अस्मद्-भूभागः, परतन्त्र एव = स्वातन्त्र्यरहित एव, संवृत्तः = जातः । केवलम महाराष्ट्रे, देशे = भूखण्डे, स्वातन्त्र्यस्य = स्वसिद्धान्तस्य, उद्यानम् = वाटिका, विकसितम् = हर्षितम् अवलोक्यते = दृश्यते । अहह = हन्त ?, तदपि = महाराष्ट्र देशमपि, एते = दुष्टाः यवनाः, भूदारा इव = शूकरा इव, उल्लुलूषन्ति = उल्लवितुमिच्छन्ति, परन्तु = किन्तु, वयमेव = भारतवर्षीया एव वयम्, न्यक्कारविषयाः = तिरस्कार-पात्रणि स्म, ये वयम् भारतीयाः, तुच्छानामेषाम् = अकिञ्चनानामेतेषां हतकानाम्, उच्छलतानाम् = उच्छृंखलानाम्, म्लेच्छहतकनाम् = दुष्टयवनानाम्, चाटुकारा इव = मिथ्याश्लाघा इव, किमिदम् = किं वयमाचरामः इत्येवम्, अविगणय्य = तिरस्कृत्य, प्राप्त संकेत एव = आदेश प्राप्ति समकालमेव, स्वबन्धु सर्वस्वमेव = स्वभ्रातृणामशेषमेव, कृत्रिमकोप ज्वालाभिः = अवास्तविक क्रोधाग्निभिः, दिधक्षामः = दग्धुमिच्छामः।

**पृष्ठ 95. दूतवर साधु तव भाषण——**

**सन्दर्भ :**—महादेव पण्डितस्य भाषणं श्रुत्वा महाराजा यशस्विसिंहः तम् प्रशंसन् कथयति दूतवर इति ।

**व्याख्या :**—दूतवर !—दूतश्रेष्ठ ! साधु = प्रशंसनीयम् तव = भवतः, भाषणभङ्गीम् = व्याख्यानच्छटाम्, (अहं यशस्विसिंहः) अत्यन्तम्

प्रशंसे, प्रशंसां करोमि, तव भाषणे = भवतः व्याख्याने, न नहि कुत्रापि, गौरवम् = श्रेष्ठत्वम्, अवगूर्यते = हीयते, पदवैधुर्यम् = आकांक्षाशमनाय अपेक्षितपद शून्यता, न = नहि ध्रियते = अवतिष्ठते, प्रसादः = स्पष्टार्थता गुणः न च निरस्यते = क्षिप्यते, संशयापादकानाम् = सन्देहजनकानाम् पदानाम्, प्रचयः = आधिक्यम्, वा प्रचीयते = बर्धते।

विलक्षणम् = विचित्रम्, तव = भवतः, पाटवं = पटुता, आलापेषु = वार्तालापेषु, गहन-गहनैः = अतिगम्भीरैः, कोमलकोमलैः = अतिशय-सुकोमलैः, मधुर-मधुरैः = माधुर्य-गुण गुम्फितैः वाचाम् = वाणीनाम्, विलासैः = सौन्दर्यैः, मनोहरसि = चित्तमाकार्षयसि। यदेव वक्तु = यदेव उपन्यसितु, प्रवर्तसे = ईहसे, तन्मूर्तिरिव = तत्स्वरूपमिव, विलिखसि = चित्रयसि, यदेव वक्तु = कथयितु ईहसे = वाञ्छसि, तदासारप्रसारैः = तद्धारा सम्पात प्रपातैः, परितः = समन्तात्, प्लावयसि = प्रवाहयसि, शिवः = महाराष्ट्रराजः, धन्यः = कुशलः, यः त्वादृशान् = त्वत्सदृशान्, कल्पना केसरिणः = नव नव विचार मृगेन्द्रान्, दूतत्वे = सन्देशहरकार्ये, नियुनक्ति = नियुक्तान् करोति, त्वदुक्तेः = त्वद् भाषणस्य, श्रवणात् = आकर्णनात्, अस्माकम् विरिरंसा-एव = विरन्तुमिच्छा एव न भवति इति।

**पृष्ठ 112—अथ महादेवस्तु——महाराजेन**

अथ महादेवस्तु, नम्रीभूय = प्रणत्य, को जानीते = को वेत्ति, यत्, किमिव, तस्य = यशस्विसिंहस्य, कर्णे = श्रोत्रे, अचकथत् = अवादीत्। यशस्वि-सिंहस्य, तद् = महादेववचनम् आकर्ण्य = श्रुत्वा, सचकितम् = साश्चर्यम्, सप्रफुल्लनयनम् = सप्रस्फारितनेत्रम्, द्विस्त्रिश्च = वारद्वयम् त्रयंवा, आमस्तकम् = शिरःपर्यन्तम्, आपादम् = चरणमारभ्य, च महादेवम्, निपुणम् = सावधानतया, निरीक्ष्य = दृष्ट्वा, ससम्भ्रम-मुत्थाय = शीघ्रतापूर्वकमुत्थाय, तथैवोत्थिम् = तेनैव प्रकारेणोत्थितं, महादेवम्, बाहू = भुजौ, प्रसार्य = प्रसृत्य, सानन्दम् = सप्रसन्नम्, परिषस्वजे = आलिलिंग। द्विः = वारद्वयम्, त्रिः = वारत्रयम्, आलिङ्ग्य =

आलिङ्गनं कृत्वा, स्वाधिष्ठिते = स्वेनाधिष्ठिते, उन्नते = उच्चे, तूलिका-विष्टरे = तूलिकास्तरणे, उपधानसमीपे = उपबर्हान्तिके महादेवेन, सह = समम्, उपविश्य = आसनं प्राप्य, मुहूर्तम् = क्षणम्, यावत् = पर्यन्तम्, सगोपनम् = गुप्तरूपेणेति भावः, शनैःशनैः = भृशम्, संललाप = वार्तामकरोत । तावत् = अस्मिन्नेव क्षणे, निशीथसमयसूचकः = रात्रि समय-संकेतकः, भेरी नादः = वाद्यविशेषनादः, समश्रावि = श्रुतः । महादेवस्तु, समाकर्ण्य = तं भेरीनादं श्रुत्वा, तत् प्रतिनिविवृत्सु = प्रतिनिवर्तितुमिच्छुः इव, उदतिष्ठत् — उत्थाय समतिष्ठत्, सपदि = शीघ्रमेव, सप्रश्रयम् = विनयपूर्वकम्, महाराजम् = श्रीमद्यशस्विसिहम्, न्यवेदयत् = विज्ञापयत् च, करुणाकरः = दयानिधे । श्वो = अग्रिमे दिवसे, रात्रौ = नक्तम्, केनापि व्याजेन = केनापिच्छलेन, महाराजेन = अत्रभगवता, पुण्यनगरात् = 'पूना' इति नामविख्यातनगरात्, कियत्क्रोशान्तराले = कियत्क्रोशव्यवधाने, स्थीयताम् = स्थातव्यम् ।

इति षष्ठो निश्वासः

## अथ सप्तमो निश्वासः

**पृष्ठ 116—अयं रेवा कुञ्जः कुसुमशर सेवेत्यादि——**

**सन्दर्भ**—पद्यमिदं सप्तमे निश्वासे सौवर्ण्याः, भविष्यतः सम्बन्धस्य अनुरागमौत्सुक्यञ्च वर्णयिष्यति, तदुपक्षिपति कविः । भानुदत्तस्येदम्—अयं रेवा कुञ्ज इति ।

अयं रेवा कुञ्जः कुसुम-शर-सेवा समुचितः, वेला दरविदलदेला परिमलः अयं समीरः नव-जलद-विन्यास चतुरा इयं प्रावृट् धन्या, हे सखि पराधीनं चेतः किमपि कर्तुम् मृगयते इत्यन्वयः ।

**व्याख्या**—अयं = पुरोदृश्यमानः, रेवायाः = एतन्नामिकायाः नद्याः, कुञ्जः = लता प्रतानाच्छन्नः गृहविशेषः, कुसुमानि = पुष्पाणि एव शराः = वाणाः यस्य तस्य कामदेवस्य, सेवायै = आराधनायै, समुचितः = अत्यन्त-मुपयुक्तः (अस्ति) वेलायां = तटे, दरम् = ईषत्, विदलन्तीनाम् = विकसन्ती

नाम्, एलानाम् = चन्द्रवालानाम्, परिमलः = सौगन्ध्यम्, यस्मिन् तादृशः अयं = एषः, समीरः = वायुः नवानाम् = नूतनानाम् जलं ददातीति जलदः तेषां = मेघानाम् विन्यासेषु = अनेकरूपेणोपस्थापनेषु, चतुरा = दक्षा, इयम् = एषा, प्रावृट् = वर्षाकालः, धन्या = परमरमणीया विद्यते, अतः हे सखि = हे आलि ! पराधीनं चेतः = हृदयम् परतन्त्रम् किमपि, अनिर्वचनीयम्, कर्तुम् = विधातुं, मृगयते = अन्विष्यति ।

अत्र पद्ये अनुप्रासालंकारः, **शिखरिणी वृत्तम्** ।

**पृष्ठ—117. क्रामन्त्यः क्षत कोमलाङ्गुलि (इत्यादि)**

**सन्दर्भ**—सप्तमे निश्वासे, पराजिते शास्तिखाने, तदीयवनितानां विरहजन्यक्रन्दनादीनाम्, दुरवस्था वर्णनीयास्ति अतः तदुपक्षिपति स्फुटक्रपद्यमिदन् क्रामन्त्य इत्यादि । कवेरुक्तिः कमपि राजानं प्रति—

**अन्वय**:—अधुना त्वद्वैरिनार्यैः, उद्यद् विवाहा इव दावाग्नि परितः क्षतकोमलाङ्गुलिगलद्रक्तैः पादैः पातितयावकैरिव संदर्भाः स्थलीः क्रामन्त्यः गलद्वाष्पाम्बु धौताननाः, भीताः, भर्तृकरावलम्बितकराः भ्रमन्ति ।

**व्याख्या**—अधुना = सम्प्रति, त्वद्वैरिनार्यः = त्वदीयशत्रुवनिताः, पुनरपि = भूयोऽपि, उद्यद् विवाहा इव = पुनः विवाहार्थमुद्यता इव, दावाग्निम्, परितः = सर्वतः भ्रमन्ति । क्षताभ्यः = कुशादिना विदारिताभ्यः, कोमलाभ्यः = मृदुलतमाभ्यः, अङ्गुलिभ्यः = चरणजातशाखाभ्यः, चलत् = पततः रक्तम् = लोहितम् येभ्यः तैः, पादैः = चरणैः, पातितयावकैरिव = लिप्तालक्तकैरिव, संदर्भाः = कुशकाशमयीः, स्थलीः = अकृत्रिमभूमीः, क्रामन्त्यः = लंघयन्त्यः, गलता = प्रच्यवता, वाष्पाम्बुना = नयनाश्रुणा, धौतम् = प्रक्षालितम्, आननम् = मुखम् यासां ताः, भीताः = त्रस्ताः, भर्तृणाम् = पतीनाम्, करेषु = हस्तेषु, अवलम्बिताः = धृताः, कराः यासां ताः शत्रुवनिताः दावाग्निं परितः भ्रमन्ति ।

अत्र उत्प्रेक्षालंकारः, **शार्दूल विक्रीडितम् वृत्तम्** ।

## सप्तमो निश्वासः

**पृष्ठ 124—या चेयं मध्यतः समुपविष्टा इत्यादि ।**

**सन्दर्भ**—मारुति-मन्दिरात् किञ्चिद् दूरे पुष्पोद्याने दोलिकायां

तिस्रः युवतयः समारूढाः सन्ति । एका दक्षिणभागे एका च वाम भागे दौलिकायां समारूढ़े स्तः । स्वोपवेशाघातेन च दोलां चालयतः । द्वयो-र्मध्ये एका समुपविष्टास्ति । ताम् मध्यतः समुपविष्टां सौवर्णीम् वर्णयति कविः या चेयमिति ।

**व्याख्या**—या चेयं = तृतीया मध्यतः = द्वयोरन्तराले, समुपष्टिा = दोलिकायां समारूढ़ास्ति, सा = युवतिः, तदपेक्षया = दोलाचालिकयोरपेक्षया, अत्यल्पम् = स्वल्पम्, वयः = अवस्याम्, जुषमाणा = सेवमाना, धम्मिल्लेन = संयत-केशसमूहेन, समुल्लसन् = शोभमानः, मूर्धभागः = मस्तकः यस्याः सा, कुङ्कुम-विन्दुना = नागरसोद्भव-तिलकेन, सुन्दरः = मनोहरः, ललाटः = भालः यस्याः सा, कज्जलाञ्जनेन = कज्जल विन्यासेन, रञ्जितम् = सुशोधितम्, लोचनयुगलं = नयनद्वयम् यस्याः सा, नागवल्लीदलस्य = ताम्बूलीपत्रस्य, रसनेन = आस्वादनेन, आ = समन्तात्, संरक्ताभ्याम् = अतिलोहिताभ्याम्, अधराभ्याम् = दन्तच्छदाभ्याम्, विव-र्द्धिता, वृद्धि गमिता, रसिकजनस्य = सभ्यस्य कामिजनस्य, पिपासा = तृष्णा यया सा ।

वृन्ताकश्यामाम् = भण्टाकी-कृष्ण-वर्णाम्, कौशेयसूत्ररचिताम् = पट्ट सूत्र निर्मिताम्, समावृतम् = समाच्छन्नम्, अर्धबाहुम् = अर्धबाहुकाम् यया ताम्, सुवर्णसूत्रैः = कनकतन्तुभिः, रचितानाम् = निर्मितानाम्, लतानाम् = वल्लीनाम्, वितानेन = विस्तारेण, रोचितः = सुशोभितः, प्रान्तः = कोणभागः यस्याः ताम् ।

अभिनवः = नूतनः, समासादितः = प्राप्तः, मांसलभावः = स्थूलता येन, तेन मांसलभावेन, वक्षसा = उरःस्थलेन, कञ्चुकीम् = चोलिकाम्, विभ्रती = धारयन्ती, दोलादोलनेन = दोलिकायन्त्रहिल्लोलनेन, यः वेग-भंगः = जवरोधः तत् परवशतया = तदधीनतया, उच्छालमुच्छालम् = उच्छाल्योच्छाल्य, उरसि = वक्षसि, निपतन्तीम् = स्खलन्तीम्, नक्षत्र-मालाम् = हारयष्टिकाम्, कुचप्रदेशाधस्तात् स्तन-तलाधोभागात्, परिवेष्टितम् = वलितम् यत्, शोणम् = रक्तम्, चेलम् = वसनम्, तस्य अञ्चले = कोणे, आपातिनीम् = पतनशीलाम्, तदुपरि भागे = चैलाञ्चलो-

परि प्रदेशे, प्रत्यक्षतः = स्पष्टतया, दरीदश्यमानम् = भृशं समवलोक्यमानम्, पूर्वार्द्धम् = पूर्वार्द्ध भागः यस्याः ताम् धारयन्ती = विभ्रती, सुवर्णस्य = कनकस्य, विजित्वरः = जयनशीलः वर्णो यस्याः, सा मूर्तिमती = शरीर-धारिणी, शोभा इव = सुषमा इव, धारितदेहा = गृहीतशरीरा, इव, प्रेम-परम्परा = अनुराग परम्परा, कलितावतारा = कृतावतरणा इव, रतिः = कामदेव पत्नी, आसीत् ।

अत्र गद्ये उत्प्रेक्षालंकारः ।

**पृष्ठ—140. सौवर्णी तु करस्थं कुसुम-स्तवकमित्यादि ।**

**सन्दर्भ**—अथ चारुहासिनी विलासिनीभ्यां भूयोभूयः शतशः कृतानुरोधा सौवर्णी क्लमक्लान्तं मुखं करतले संस्थाप्य कमपि दुष्प्रतीकारं व्याधिमिव प्रकटयन्ती, नयनाश्रु-प्रवाहेण, घर्मजल प्रवाहैण च हृदयस्थितं धैर्यं बहिः निष्कासितवती इत्येव वर्णयति—सौवर्णी तु——

**व्याख्या** :—सौवर्णी तु = कौसला तु, करस्थं = हस्त-स्थितं कुसुमस्तवकं = पुष्प-गुच्छम्, क्षिप्त्वा भूमौ विकीर्य, दक्ष-करतले = दक्षिणकर-किसलये एव, कपोलम् गण्डस्थलम्, संस्थाप्य, आश्रयीकृत्य, निरन्तरस्य = सततस्य, परिक्रमस्य परिक्रमणस्य, क्लमेन खेदेन, क्लान्तम् खिन्नम्, मुखम् = वदनम्, कमलपल्लवोदरे पद्मकिसलयान्तराले, कलानाथमिव = चन्द्रमसमिव, कदर्थयन्ती = तिरस्कुर्वन्ती, विरहजन्मना = वियोगोत्पन्नेन, धवलिम्ना श्वैत्येन, भस्मनेव = भणितेनेव रूपिता लिप्ता, बदरवत् बदरी फलवत्, पाण्डुना पीतेन, गण्डेन = कपोलेन, उष्ण श्वास प्रश्वासयोः संतप्त मुखश्वासप्रश्वासयोः, आघातैः = ताडनैः, शुष्केण नीरसेन, अधरेषु दन्तच्छदेन, स्वेदजुषा घर्मजल-युक्तेन, वपुषा शरीरेण, कञ्चन अनिर्वचनीयम्, दुष्प्रतिकारम् रोगम्, स्पष्टयन्ती प्रकटयन्ती, चक्षुषी नेत्रे, धवलयता श्वेतिमानं सम्भवयता, कपोलौ = गण्डस्थले, मलिनयता = मलिनतां प्रापयता, अधरं दन्तच्छदं, ताडयता प्रहरता ।

रागम् मुखोष्ठादिगतं, रंजनम् अपहरता दूरं कुर्वता, वक्षसि = उरःस्थले, शतधारीभूय = अनेक प्रवाहतां प्राप्य, पटसन्धिषु वसन बन्धनेषु, प्रवहता = प्रसरता, वाष्पविन्दु-सन्दोह प्रवाहेण = अश्रु पृषत्समूह-

धारया, स्वान्तःस्थम् = आभ्यन्तरिक, धैर्यम् = धीरताम्, गाम्भीर्यम् = गम्भीरताम्, प्रवाहयामास = धारा रूपेण निःसारयामास इति ।

**अत्र गद्ये उत्प्रेक्षा लुप्तोपमा चालंकारः ।**

**पृष्ठ**—164. **तत्क्षणादेव——गौरसिंहः ।**

तत्क्षणादेव = भूमौ पतिते अध्यक्षे तथा वर्षणे शान्ते जाते, संन्यासिनाम् = चतुर्थाश्रमिणाम्, यः कदम्वः = समूहः तेन, सवलितः = संयुक्तः समेतो वा, कतिपयैः = कैश्चित्, सादिभिः = अश्वारोहिभिः, अनुगतः = गौरसिंहः, समाजगाम = आगतवान् । एते गौरसिंहादयः कपटसंन्यासिनस्तु, छद्ममस्करिणस्तु, यवन-स्पर्शे = म्लेच्छानमास्पर्शने, घृणाम् = जुगुप्साम्, आवहन्तोऽपि = कुर्वन्तोऽपि, क्षात्र-धर्ममाकलय्य = क्षात्रियोचित धर्मं सम्यग् विचार्य, झटिति = त्वरया, तत्कञ्चुकैः तेषां मूर्च्छितानां यवनानां वसनैः, दिल्लीश्वर नाम्ना, अङ्कितैः = चिह्नितैः, रजत फलकैः = रौप्यपट्टिकाभिः, अलङ्कृतैः = सुभूषितैः, उष्णीषैः = शिरोवेष्टनैः, तादृशोभि = तत्सदृशीभिः, पित्तल = पट्टिकाङ्कितकटिबन्धैः = रीतिफलकाङ्कितपरिकरबन्धैः, च, आत्मानम् = स्वम् = अलञ्चक्रुः = भूषयामासुः । एवम् केचन = केचित्, तरुशाखा = लम्बितान् = वृक्षस्कन्धनिवद्धान्, वाजिनः = घोटकान्, उन्मुच्य = परिहृत्य, वल्गादीनाम् = कविकादीनाम, योजनैः संदधानैः, सज्जीकृत्य = भूषयित्वा, वलिताः = धारिताः = वारबाणा = कवचानि यैस्ते, सुप्तसादिनाम् = शयिताश्वारोहिणाम्, शस्त्रैः = अस्त्रैः, एव धानुष्काः = चापधारिणः, काण्डीरा = बाणवन्तः, शक्तिकाः = शक्ति प्रहणाः, याष्टीकाः = यष्टिप्रहरणा, पारश्वधिकाः = परश्वध प्रहरणाः, प्रासिकाः = प्रास हरणः नैस्त्रिंशिकाः = खड्गप्रहरणाः, कौन्तिकाः = भल्लप्रहरणाः, फलकपाणयश्च = फलकहस्ताः (ढाल, लोकभाषा) भूत्वा = समलङ्कृताः, तान् = अश्वान्, आरूरुहुः = पृष्ठेषु तस्थुः । अपरे = अन्ये, तथैव, परिवर्तितवेषाः = अंगीकृतयवनवीरनेपथ्याः, जङ्घालाः = वेगेन धावकः, इतरे च, वाहकतामङ्गीकृत्य = शिविकासोहितांस्वीकृत्य, पालङ्कीमुत्थाप्य = शिविकामुन्नीय, सर्वैरेववीरैः सह, तोरणदुर्गाभिमुखमेव = तोरणदुर्गं प्रति, चल चलेति भाषमाणाः, चेलुः = जग्मुः । एवम् रसनारीम् = 'रोशनआरा, इति ख्याताम्, एनाम् युवतीम्, तोरण-दुर्गे, संस्थाप्य = प्रापयित्वा,

दुर्गाध्यक्षं च = दुर्गाधीशं च, यथोचितादरैः = राजनार्योचित्सत्कारैः, सत्कर्तुम् = सम्मानयितुम्, रक्षितुम् = त्रातुम्, च प्रार्थ्य = निवेदनं कृत्वा, जवन्तम् = वेगवन्तम्, निजम् = स्वीकीयम्, आजानेयम् = शोभनमश्वम्, आरुह्य = पृष्ठे स्थित्वा, उत्थाय वा, तन्निगालम् = तस्य गलोद्देशम्, आस्फोट्य = आश्वास्य, रघुवीरेण सह, क्वचिदास्कन्दितैः = कुत्रचिदास्कन्दितैः = अर्थादुत्प्लुत्योत्प्लूत्यगमनैः, क्वचित्, धौरितकैः = वेगात् गमनैः, क्वचिद् वल्गितैः = उच्छालनविशेषैः प्लुतैः = प्लुतगत्या (प्लुतास्कन्दित धौरित करोचित वल्गितानि, इत्यश्वगतिः पञ्चधा) निम्नलोचति = अस्तं गच्छति, मार्तण्डमण्डले = भास्करे, सपदि = शीघ्रमेव, गौरसिंहः, सिंहदुर्गम् आयातः = आगतवान् ।।

**पृष्ठ 167. अथोच्चाया एकस्या वेदिकायां उपरि......**

**सन्दर्भ** :—अद्य रात्रौ शास्तिखानमाक्रमितुमिच्छुः शिवः अंतरंग मित्रैः सह, दूरवीक्षण यन्त्रेण पुण्यनगरं विविधभङ्गपूर्वकम् आलोकयति । सर्वे मिलित्वा, पर्यालोचयन्ति च ।

**व्याख्या** :—अथ = सैनिकसाजसज्जानन्तरं एकस्याः उच्चायाः = उन्नतायाः, वेदिकायाः = वर्तुलोच्चपीठ शिलायाः, उपरि, समारूढः = आरूढः, महाराष्ट्रराजः = शिववीरः समवालोकयत = दृष्ट्वान् यत्, पूर्वस्यां दिशिरिङ्गत्तरंग भङ्गै = समुच्छलल्लहरीच्छेदैः, आहतम् = ताडितम् तीरम् = तटप्रदेशो यस्याः सा, शीतलसमीरा = शिशिरवायु समवेता, धलद् धलद् ध्वनि धीरा = धलद् इत्यनुभूयमान शब्देन, धीरा = मन्दगमना, गम्भीरा = अगाधजला, नीरानाम्नी = एतन्नाम्नी, नदी = सरित्, प्रवहति = सवेगं व्रजति । दक्षिणां = दक्षिणस्यां, प्रतीच्यां = पश्चिमायाम्, गिरिराजीनाम् = पर्वतश्रेणीनाम्, परितः = सर्वतः गिरिराजयः = शैलसमूहाः, स्वकीयैः = निजैः, अभ्रंलिहैः = मेघस्पर्शिभिः, उच्चोच्चैः = अतिशयोन्नतैः, सानुभिः = शृङ्गैः, अधित्यकारूढैः = पर्वतोर्ध्ववर्तिभिः, अरण्यानीसंस्थानैः = महारण्यनिवेशैः, मेघमालामण्डलभ्रमम् = जलदराजि-विम्बभ्रान्तिम्, उत्पादयन्ति = कुर्वन्ति, उदीच्याम् = उत्तरस्याम्, सुदूरविस्तृतम् = अति विस्तीर्णम्, हरितशाद्वलम् = हरिद्वर्णं घासमयम्, ततश्च = तस्मादग्रे च, पुण्यनगरं = पुनेति प्रसिद्धपुरम्, अवलोक्यते = दृश्यते ।

दुर्गम् = सैनिकावासम् इदम्, शैलशिखरस्थम् = पर्वत शिखरस्थितम्, इति हेतोः दूरवीक्षण-नलिकातः = दूरवीक्षण यन्त्रेण, वीक्षणेन = अवलोकनेन, विलिख्य = लिखित्वा, स्थापितं = निहितं, चित्रमिव = प्रतिकृतिरिव इदं नगरम् पुण्यनगरम्, आलोक्यते = दृश्यते। शिववीरः = महाराष्ट्र राजः, स्वेन = शिवेन, सह = सार्धम्, द्वित्राणि = द्वित्रिसंख्याकानि, मित्राणि = वयस्याः, सतर्कम् = तर्कसहितम् विविधभावभङ्गसहितम्, एनत् = एतत्, नगरम् पुण्यनगरम्, आलोकयन्ति = पर्य्यालोचयन्ति च।

एतस्मिन् नगरे = पुण्यनगरे, रजन्यां निशायामद्य, केन = कापि दुर्घटना = अभूतपूर्वा घटना, भवित्री, इति सर्वे पर्यालोचयन्ति स्म = व्यचारयन्।

**पृष्ठ—(169) वीरवर क्षम्यतां नाहं युष्माकं धैर्यम्—**

**सन्दर्भ**—शिववीरस्य मित्राणां, युद्धयात्रायां सहगमनाय, सानुरोधं प्रार्थनाञ्च श्रुत्वा शिववीरः तान् युक्तियुक्तं प्रत्युत्तरति वीरवर क्षम्यतामित्यादि।

**व्याख्या**—वीरवर = वीरश्रेष्ठ! क्षम्यताम् = मृष्यताम्, नाहं = शिवः, युष्माकम् = भवताम्, धैर्यम् = धीरताम्, वीर्यम् = पराक्रमम् वा विस्मरामि = विस्मतुं शक्नोमि। परम् = परन्तु, अनुरोधैः = आग्रहैः, अद्य = साम्प्रतम्, अलम् = व्यर्थम्, केवलम् आशीभिः = आशीर्वादैः, एष = अयं, जनः = शिवः, संवर्द्ध्यताम् = प्रोत्साह्यताम्, निश्चयेन = ध्रुवमेव, अहम् = शिवः, युष्मदाशीभिः = युष्माकम् आशीर्वादैः, संवर्द्धितः = वृद्धिं गमितः विजेष्ये = विजयं प्राप्स्यामि।

दैवात् = भाग्यात्, वीरगतिम् = ऊर्ध्वगतिम्, गतश्चेत् = प्राप्तश्चेत्, भवत्सु युष्मासु, कुशलिषु = विद्यमानेषु, पुनरपि भूयोऽपि, स्वातन्त्र्यमेव = स्वाधीनतेव, महाराष्ट्र राज्यम् = कोङ्कणप्रदेश शासनम्, पुनरपि = भूयोऽपि वैदिको धर्मः = सनातनधर्मः, प्राप्तशरणः = लब्धरक्षण एव, पुनरपि = तदापि, भारतप्रत्यर्थि-पत्नीनाम् = हिन्दु-शत्रुस्त्रीणाम्, वक्षःसु = उरःस्थलेषु, कम्पएव = भयजनित कम्पनं भवत्येव,। मया सह = शिवेन सह युष्मासु = भवत्सु, भारतभुवं = हिन्दुभूमिम्, विरहयत्सु = विरहितां कुर्वत्सु,

कस्मिन् = जने, धर्मः = वैदिकं धर्मः, धुरम् = भारम्, धारयिष्यति = समर्पयिष्यति, भारताभिजनस्वातन्त्र्यसारः = हिन्दवदेश-स्वाधीनताभारः, कम् = जनम् अवलम्बिष्यते = आलम्बनं करिष्यते । नवां = नूतनां, उन्नतिं = वृद्धिम्, आसादयन्ती = प्राप्नुवती महाराष्ट्र जातिः, कस्याग्रे = कस्य सम्मुखे, रोदिष्यति = क्रन्दिष्यते, तद् अलम् = व्यर्थम्, आलप्यान्यत् = गन्तुं चर्चापि न कार्या । सह सहचराय = सहगणाय, मे = मह्यम्, स्वास्ति = कल्याणम्, उच्यताम् = कथ्यताम्, यथाग्रहं लीलयैव = खेलयैव एतान् प्रमत्तहतकान् = यवनान्, विजेष्ये = विजितान् करोमीत्यर्थः ।

**पृष्ठ—171. अथ ससस्तक——प्रत्यज्ञासीदार्यः ।**

अथ = शिववीरेण गौरसिंहः सेनापतिपदेन पुरस्कृते सति, समस्तकं नमनम् = समस्तकं नम्रीभूय, अङ्गीकुर्वति = स्वीकुर्वति, गौरे = गौरसिंहे, शिवेङ्गितेन = शिववीर सङ्केतेन, तत्पदार्हाणि = तस्य स्थानयोग्यानि, वासांसि = वस्त्राणि, विश्राणयति = ददति, मुरेश्वरे = मुरेश्वर इति नामसैनिके, तत्पद सूचकम् = सेनापति पदविज्ञापकम्, एकं सुवर्णपट्टम् = एकं हैमफलकम्, वक्षसि = वक्षस्थले, तथा च, ससुवर्णकोशम् = सुवर्णेन् निर्मितेन आच्छादकेन सहितम्, खड्गम् = असिम्, कटिप्रदेशे = गौरस्य कटिभागे, शिवः = शिववीरः, स्वहस्तेन = स्वकरेण, स्वयमेव आयोजयत् = योजितवान् । तदुदारतायाः शिववीरस्य मुक्तहस्तविश्रणनस्य, वर्णने, कविताः = काव्यानि, रचयन्तम् = सृजन्तम्, पठन्तम् = तस्य एव पाठं कुर्वन्तम् च, भूषणम् = भूषणइति कविम्, मौक्तिकमालया = मुक्ताभिर्निर्मितया लवन्तिकया, सम्मान्य = संपूज्य यावत् = यथैव, पुरः = पुरतः पश्यति = लोकते, तावद् दृष्टम् = तथैवापश्यत्—पुरतः = अग्रे, चिरसहचरः = चिरसहयोगी, माल्यश्रीकः, नयनजलेन = अश्रुजलेन, क्षालितौ = धौतौ, कपोलौ = गण्डस्थले यस्य सः माल्यश्रीकः सहगमनानुमतिम् = युद्धे शिववीरेण सह गमनस्वीकृतिं, वाञ्छति = इच्छति, इति । तन्निषेधन् = माल्यश्रीकस्य युद्धे गमनस्यास्वीकृतिम्, अनुमतिंम्, मन्यमानः = स्वीकुर्वन, तत्प्रार्थनाम् = तन्निवेदनम्, अङ्गीकृत्य = स्वीकृत्य, चरणयोः = पादयोः, पतितम् = लिप्तम्, रघुवीरम्, अपश्यत् = अलोकयत् । "किं किम् ? वा,

किमपि, कथनीयम् =वक्तव्यमसि" =इत्येवम्, शिववीरेण सः =रघुवीरः, पृष्टः, तदा सः, प्रावोचत् =अब्रवीत् ='महाराज' तद्दिने =तस्मिन् दिवसे, तोरणदुर्गात्, सपदि =त्वरया, पत्रादिकम्, आनीतवन्तम्, =आनयन्तम्, मामवलोक्य =दृष्ट्वा, प्रसन्नः =प्रहृष्टः, आर्यः =अत्रभवान्, पारितोषकम् =पुरस्कारम्, प्रत्यज्ञासीत्...प्रतिज्ञातवान् ॥

पृष्ठ—182. सेनानीस्तु——व्यचेष्टिष्ट ।

सेनानीस्तु =सेनापतिः शस्तिखानस्तु, महादेवस्य, पण्डितस्य, आलापम् =वार्ताम्, स्मरन् =चिन्तयन्, सुप्तः =शयितवान्, =इति, स्वप्नेऽपि =शयनेऽपि, बद्धकरसम्पुटम् =कृताञ्जलिम्, सन्धिम् =सम्मेलनम् प्रार्थयमानम् =निवेदयन्तम्, स्वाग्रतः =स्वपुरतः, स्थितम् =उपस्थितम्, शिवराजम्, पश्यन् =ईक्षमाण आसीत् । अकस्मात् =सहसैव, उत्थापितः =उन्निद्रितः, शास्तिखानः क्षणमुपधानम् =क्षणमुपबर्हम्, क्षणम्, पल्यङ्कपट्टिकाम् =पर्यङ्कपट्टिकाम् (भुजम् वा) 'पाटी' इति हिन्दी, क्षणम् सीमन्तिनीजनस्य =ललनावर्गस्य, ग्रीवाम् =कन्धराम्, समालिङ्गन् = समाश्लिषन्, परतः =अन्तत, प्राप्तचेतनः =चेतनां सम्प्राप्य, समज्ञासीत = अजानात् यत्, पुण्यनगरम्, वशंवदम् =स्वाधीनम्, विधाय कृत्वा, महाराष्ट्राः =महाराष्ट्रवीराः, अन्तः पुराक्रमणमपि =अन्तःपुरमपि, आक्रमितम व्यदधुः =कृतवन्त इति । अथ =एवमवधार्य, सपदि =शीघ्रमेव, समुत्थाय = शयनं परित्यज्य, येनैव- पथा =मार्गेण, पलायितुम् =धावितुम्, इयेष = ऐच्छत्, तत एव, सखड्गम् =असिसहितम्, महाराष्ट्र-योद्धारम्, मूर्तिमन्तमिव =साक्षात्, मृत्युमुपस्थितम् =यमराजमुपस्थितम्, अवलोक्य =दृष्ट्वा, पुनः प्रविश्य =तस्मिन्नेवकक्षेऽन्तःप्रवेशं कृत्वा, स्वाधि-ष्ठितस्य =स्वेनाध्युषितस्य, कोष्ठस्य =सुदीर्घकक्षस्य, प्रधान द्वारम् = मुख्यद्वारम्, पक्षद्वाराणि च =गवाक्षांश्च, प्यधात् =अनर्गलितवान् । स्त्रीभिः सहितः =नारीभिः सहितः, स्वयम् =शास्तिखानः, एकल एव =एकाकी एव, च, पुरुषः, अन्तस्थः =कोष्ठस्थः, प्रच्छन्नतया =गुप्ततया, व्यचेष्टिष्ट =यतितवान् ।

**पृष्ठ 190. साम्प्रति——आरुरुहु :—**

"सम्प्रति = अस्मिन् समये, साधनीयम् = चलनीयम्, यतो हि, पलायितः = धावितः, शास्तिखानः, पुनरत्र, नाऽऽयास्यति = नःऽऽगमिष्यति, सम्मुखम् = प्रत्यक्षे, इति = अतएव, क्षिप्रम् = शीघ्रम्; सिंहदुर्गः, आसादनीयः = प्राप्तव्यःइत्येवम् शिवेनाऽज्ञप्ताः = शिववीरस्याज्ञाँ प्राप्ताः, त्यक्त-रुधिरारक्त-वसनाः = विसृष्टशोणित-शोणवसनाः, प्रासादस्य = हर्म्यस्य, नागदन्तिकासु = कीलिकासु, अवलम्बितैः = स्थापितैः एव, बहुभिः = अनेकैः, वसनैः = वस्त्रैः, वेष्टिताः = निहितवसनाः, कतिचन = केचन योद्धारः, प्रत्यर्थिनः = शत्रोः, परिचारकानाम् = भृत्यानाम् वसनपट्टिकाशस्त्रैः = वस्त्रफलकास्त्रैः, आलोचकानाम् = द्रष्टृणाम्, यवनभृत्य-भ्रमम् = म्लेच्छपरिचारकभ्रान्तिम्, उत्पादयन्तः = प्रकाशयन्तः, निर्भयाः = भयरहिताः, सर्वेऽपि = सैनिकवीराः, घोरान्धकारायाम् = घनान्धकाराच्छादितायाम्, यामिन्याम् = रात्रौ, प्रचलिताः = गतवन्तः । निर्विघ्नम् = निर्बाधम्, पुण्यनगरात्, बहिरागत्य = बाह्यं संप्राप्य, यथासङ्केतमाक्रमणेन = पूर्व-निश्चिय योजनानुसारेणाक्रमणेन, विजितबाह्यसेनासन्निवेशम् = स्वायत्तीकृत-बहिर्गत बलशिविरम्, सम्यक्, उन्मुदितसर्व-गोपुरम् = उद्घाटितनिखिल-पुरद्वारम्, संस्थापितौ = नियुक्तौ, निजयामिकद्वाररक्षकौं यत्र तम्, स्वर्ण-देवगौर सिंहाभ्याम्, अध्युषितम् = अधिष्टितम्, बलम् = सेनाम्, साक्षा-त्कुर्वन्तः, गव्यूतिं यावत् = क्रोशद्वयपर्यन्तम्, अन्धतमसे गाढान्धकारे, एव, उच्चावचम् = नतोन्नतम्, पाणिन्धमम् = पाणयो ध्मायन्ते यस्मिन् सर्पाद्यपनो-दनं तम्, व्यतीत्य = पारंकृत्वा, ततः = परम्, शतशो दीपान् = शतशो प्रदीपकान्, संज्वल्य = दीपयित्वा, पुण्यनगरस्थैः, कान्दिशीकैः = भीतैः, पराजितैः = परास्तैः, प्रत्यर्थिभिः = शत्रुभिः प्रजाभिश्च = पुण्यनगरस्य जनताभिश्च, वीक्ष्यमाणाः = पश्यन्तः, कुशलेन = क्षेमेण, सिंहदुर्गम्, आरुरुहुः = आरूढवन्तः इति ॥

**इति सप्तमो निश्वासः ।**

## अथ अष्टमो निश्वासः

**पृष्ठ—197. अथैकदाऽट्टालिकायां पर्यटत्या दक्षिणस्यामिति—**

**सन्दर्भ :—**तोरणदुर्गे प्राप्तसंज्ञा रसनारी, क्व आयाता, केन

संयता, किं भावीति किमपि न वेत्ति स्म । तदनन्तरं एकदा अट्टालिकायां भ्रमन्त्या पाद-ध्वनिरिवाश्रावीति वर्णयति कविः ।

**व्याख्या** :—अथैकदा = एकस्मिन् समये, अट्टालिकायां = हर्म्ये पर्य्यटन्त्या भ्रमन्त्या, दक्षिणस्यां = दिशि, सुदूरम्, = अतिविस्तीर्ण प्रदेशम्, यावत् विस्तृताम् = महताम्, काननानाम् = विपिनानाम्, अभ्रं-लिहानाम्...मेघस्पर्शकारिणाम्, शैलशिखराणाम्, = पर्वतशृंगाणाम्, कालिन्दीसलिल-सौन्दर्य-विजित्वरेण = यमुनाजल-लावण्य-विजय-समूहेन, कारिणा, अतिहरितेन = अतिशय हरिद्वर्णेन, वनौषधिवृन्देन = वनस्पति समूहेन. व्याप्तानाम् = सुशोभितानाम्, उच्चावचतलानाम् = निम्नोन्नत भूभागानाम्, अन्तःस्रवताम् = प्रवहताम्, प्रस्रवणानाम् = निर्झराणाम्, स्रोतसाम् = प्रवाहाणाम्, समीपे = अन्तिके, नरीनृत्यमानानाम् = अतिशय नृत्यताम्, मेघ-नादानुलासिनम् = मयूराणाम्, लास्यैः = नर्त्तनैः, ललिता-नाम् = मनोहराणाम्, उपत्यकानाम् = अद्रेः आसन्न भूमिभागानाम्, द्रुमाद् द्रुमम् वृक्षाद् वृक्षम्, शाखातः शाखाम् = विटपाद्, विटपम्, गण्डशैलात् गण्डशैलम् पर्वतशिखरात्, पर्वत शिखरम्, दन्तकात् दन्तकम् = अद्रिकट-कात् अद्रिकटकम् = पादाच्च पादम्, प्रत्यन्त पर्वतात् = प्रत्यन्त पर्वतम्, सपत्र कम्पनम् पक्षधूननसहितम्, सचञ्चु चाञ्चल्यम् = सत्रोटि चापल्यम्, सग्रीवाभङ्गम् = सकन्धराकम्पम्, सपक्षति कण्डूयनम् = सपक्षमूल खर्जनम्, सकूजनम् = सकलरवम्, प्रोड्डीनोड्डीन संडीनैः = पक्षिणां गति विशेषैः उड्डीय = उत्पत्य, गच्छताम् = व्रजताम्, कलविङ्कानाम् = चटकानाम्, कर्करेटूनाम् = करेटूनाम्, किंकीदिवीनाम् = चाषाणाम्, कपोतानाम् = पारावतानाम्, कोकानाम् = चक्रवाकानाम्, काकानाम् = वायसानाम् कीराणाम् = शुकानाम्, क्रौञ्चानाम् = चक्रवाक विशेषाणाम्, कुरराणाम् = उत्क्रोश कारिणाम् पक्षिणाम्, शोभाः = सुषमाः, पश्यन्त्या = अवलोकयन्त्या, अकस्मात् = सहसा, बहूनाम्, = अनेकेषाम् पादध्वनिरिव = चरण शब्द इव, अश्रावि = श्रुतः ॥

**पृष्ठ—213. प्रभो ! गौरः प्रकृत्यैवाति सुन्दरः, तत्रापि——**

**सन्दर्भ—**मात्यश्रीकः मायाजिह्मस्यापहरणोदन्तं शिववीरं

श्रावितवान् । ततः शिवस्यानुरोधेन अपहरणवृत्तान्तं विशकलय्य श्रावयति माल्यश्रीकः, प्रभो गौर इति ।

**व्याख्या**—प्रभो ! = महाराज ! गौरः = गौरसिंहः, प्रकृत्यैव = स्वभावेनैव, अतिसुन्दरः = अतिमनोहरः, तत्रापि = तथापि दिवा-कीर्तिम् = नापितम्, आहूय = आकार्य्य, मसृणमुखः = चिक्कणाननः, संवृत्य = भूत्वा अधररागम् = ओष्ठलोहित्यकारकम्, अञ्जन रञ्जनम् = कज्जलेन शोभा-सम्पादनम्, वारवधूयोग्यम् = वेश्यासदृशम्, आभरण-जातम् = आभूषणादिकम्, प्रच्छद पट्म् = आवरकवस्त्रम् च धारयित्वा = परिधाय, पटवास वासित दिगन्तरः = वसन सौगन्ध्य सुरभित हरिदन्तरालः, रतिप्रतिकृतिरिव = कामनीप्रतिमूर्तिरिव, स्मितैः = ईषद्हास्यैः, कटाक्षक्षेपैः = भ्रूभङ्ग-सञ्चालनैः, मधुरवचनैः = कोमलभाषणैः, सजघन कम्प पाद-क्षेपैः = सजघन वेपन पुरस्सर पादन्यासैः, कृत्रि-मयोः = निर्मितयोः, कुचयोः = स्तनयोः, वेपनेन = कम्पेन, वलितैः = उपचितैः, वलिभङ्गेन = त्रिवलीभङ्गेन, ललितैः = सुन्दरैः, कञ्चुकिका दर्शनैः = चोलिका प्रकटनैः, यूनाम् = युवकानाम्, मनः = चित्तं, मन्मथो-न्मथितम्, विदधत् = कुर्वाणः, ब्रह्मचारि कुटीर वासिनाम् = आश्रम निवासिनाम्, संन्यासिनामेव = धृतस्वामिवेषाणामेव, परिवर्तितवेषैः = नवीकृत नेपथ्यैः, कैश्चित् = संन्यासिभिः, कलितमृदङ्गैः, धारित मृदङ्गैः, अपरैः = अन्यैः, तानपूरिकातालेन = तानपूरेति ख्यातवाद्येन, झर्झरौ = झर्झर ध्वनि सहितौ, करौ = हस्तौ येषां तैः, अन्यैः = अपरैः, व्यजनम् = तालवृन्तकम्, पतद्ग्रहः = निष्ठ्यूतग्रहः, ताम्बूलकरङ्कम् = ताम्बूलाधारपात्रम्, मञ्जीर पोटलिका = मञ्जीराधार वस्त्रम्, वाहकै = धारित भृत्यैः, इतरैश्च = अन्यैश्च, पञ्चषैः = पञ्चभिः षड्भिर्वा, कलित-दासी वेषैः = गृहीत भृत्यानेपथ्यैः, अनुगम्यमान = अनुपूज्यमानः, सौवर्णेन = हरिण्मयेन, प्रच्छदेन...प्रच्छादनपटेन, आच्छन्नाम् = परितः पिहिताम् अतिरमणीयाम् = अतिमनोहराम् एकाम् शिविकाम् = पालकीति प्रसिद्धाम् आरुह्य = उपविश्य, धीरैरेव = मन्दमन्दैः, आकलितभारवाहवेषैः = धारित शिविकोद्वाहकवेषैः, उह्यमानः = नीयमानः, तदीय शिविर मण्डलम्

=मायाजिह्य शिविरासन्नम्, आसाद्य=प्राप्य, जगत्प्रसिद्धा=संसार श्रेष्ठा, महाराष्ट्रदेशीया...कोङ्कण देशीया पद्मिनी नाम्नी, वाराङ्गना वेश्या, समागच्छति=समायाति, इति समसूसुचत्=समबूबुधत्।

**पृष्ठ—226. विजयतां पाथोधि-पयःपूर परवर्ति-परश्शत——**

**सन्दर्भ** :—रसनार्या सहालप्य, सिंहदुर्गमागच्छन्तं शिववीरं कश्चित् सन्देशहरः सन्देशं कथयित्वा पत्रञ्च समर्प्य, पुनः महाराष्ट्र राजस्य नास्ति लेख-पाठादिषु पाटवम्" इति स्मरन् पत्रं गृहीत्वा स्वयं पठितु मारब्धवान् विजयतामिति—

**व्याख्या**—पाथोधिपयःपूरे=वारिधि वारि समूहे, परिवर्तिषु=सञ्चालितेषु, परश्शतेषु=शताधिकेषु, पोतेषु=नौकासु, सांयात्रिकाणाम्=पोतवणिजाम्, समूहेन=सन्दोहेन, जेगीयमानायाः,=वारं वारं उद्घोष्यमाणायाः, कीर्तिचन्द्रिकायाः=यशः कौमुद्याः, चुलुकने=चुलुकीकरणे, चकोरीभूतः=चकोरपक्षितां गतः, कोङ्कण, कल्याण, खान देशादि महा मण्डलस्य प्रजागणो यस्य सः एवम्भूतः, सद्यःच्छिन्नाभ्यः=तत्काल खण्डिताभ्यः, प्रत्यर्थिनाम्=शत्रुभूतानाम्, पृथिवीपतीनाम्=भूमिपालानाम् कन्धराभ्यः=ग्रीवाभ्यः, विगलता=क्षरता, कवोष्णेन=ईषदुष्णेन, शोणेन—रक्तवर्णेन, शोणितप्रवाहेण=रुधिरधारया, परितर्पितया=तृप्तिमानीतया, डाकिनी, शाकिनी, भूत-प्रेत मण्डल्या, विलोडितानाम्=मथितानाम् ताम्रश्मश्रुगण्डानाम्=सरक्तककूर्चकपोलानाम् यवनानाम्, मुण्डमालाभिः=च्छिन्नमस्तकाभिः स्रग्भिः, मण्डिता=सुशोभिता, चण्डी=दुर्गा, येन सः, सनातनधर्मरक्षणसक्षणः=वैदिकधर्मरक्षणसमर्थः।

रिपुनिकरस्य=शत्रु समूहस्य, सम्पत्तिरेव=वैभवम् एव, सीमन्तिनी=वनिता, तस्याः वनितायाः धम्मिल्ले=केशबन्धे, वेल्लितेन,=संचलितेन, मल्लिका मतल्लिकामाल्येन=प्रशस्तमल्लिकाहारेण, सुबासितः=सुगन्धितः, करपल्लव तल्लजः=प्रकृष्ट हस्य किसलय यस्य-सः, परस्सहस्र श्री संवलितः=अत्यधिक सुषमाशाली, श्रीमहाराष्ट्र मण्डलाखण्डलः=कोङ्कणदेश देवेन्द्रः, विजयताम्=जयतु।

**पृष्ठ 231. सच वारम्———एवावर्तिष्ट।**

सच=मायाजिह्वश्च, वारंवारम्=अनुवारम्, आमन्त्र्यमाण=

विस्मयाकुले, तन्द्रासम्पर्कजुषी = निद्राद्यवस्थासंसर्ग सेविके, चक्षुषी = नेत्रे, चिरालस्येन, मन्थराभ्याम् = शिथिलप्रायाभ्याम्, हस्ताभ्याम्, सम्मर्द्य = मर्दनं विधाय, क्षणम्, आत्मानम् = स्वम्, क्षणम्, कुटीरम् = शिविरम, क्षणम्, परिता = सर्वतः, परिसर्पिणी = परिगच्छतः, जनान् = मनुष्यान्, क्षणम्, सान्द्रया = घनीभूतया, श्यामतया = कार्ष्ण्येन, श्यामीकृतम् = कृष्णतामापादितम्, दिग्वलयम् = हरित्समूहो यस्मिन्, तादृशं वनम्, क्षणं च, क्वचन = क्वचित्, कलितविकोशखड्गैः = धारितनग्नासिभिः, भटैः = वीरैः, क्वचन = कुत्रचित्, ब्रह्मपाठपरैः = वेदाध्ययननिरतैः, ब्रह्मचारिभिः = ब्रह्मचर्याश्रमिभिः, क्वचन, श्मश्रुकूर्चकेश-जालजटालैः = श्मश्रुकूर्चादीनां केश समूहैः, जटिलैः = जटायुतैः साधुभिः, क्वचन = क्वचित्, बाहु युद्धम् = नियुद्धम्, अभ्यस्यद्भिः अभ्यासं कुर्वद्भिः, खड्गचालनचातुरीमासाद्भि = असिचालनचातुरीं प्राप्नुवद्भिः, व्यायामोत्त जितोच्छ्वासैः;= शरीरपुष्ट्यर्थं विविधव्यायामवर्धितोच्छ्वासैः, धूलिधूसरैः = पांसुभिः लिप्तैः, पटुभिर्बटुभिः = प्रवीणैः बालैः, विहितम् = आकलितम्, विविधक्रीडम् = अनेकक्रीडायुतम्, शाद्वलम् = घासम्, क्वचन्, सदक्षाक्षिकुञ्चनम् = दक्षिणनयनसंकोचपुरस्सरम्, भुशुण्डीमुत्तोलमुत्तोलम् 'बन्दूक' इतिशस्त्रविशेषमुत्थाप्योत्थाप्य, चिञ्चाकिशलयाग्रेषु तिन्तिडी-पत्राग्रभागेषु, लक्ष्यम् = शरव्यम्, अनुसन्दधतः = साधयतः, वीरांश्च = भटांश्च आलोकमालोकम् = पुनःपुनः दृष्ट्वा, चकितचकितः = अतिचकितः, भीतभीतो = अतिभयाक्रान्तः, लज्जितलज्जितो = अत्येव लज्जितः सन्, वाचंयमः = मौनी एव, अवतिष्ट = स्थितः ।

**पृष्ठ 241. प्रभो ?——अजीगमाव ।**

अत्र पुरोहितः ब्रह्मचारिगुरूं कथयति

प्रभो ? = भगवन् : नायमवसरः = नाय समयः शुष्कचिन्तया = कर्त्त व्यशून्यतया, क्षणमपि = महूर्त्त मपि, अतिवाहयितुम् क्षपयितुम्, अस्ति । अस्मिन्नुडुपे = नाव्यस्याम्, बहवः = बहुलाः, कार्पासभारः = तूलभाराः सन्ति, तेषामेकं भारम्, दृढकराभ्याम् = कर्कशहस्ताभ्याम्, धृत्वा = विगृह्य, भवता = श्रीमता, प्लवप्रान्तस्थे = नौकासमीपवर्तिना, भाव्यम् = भवितव्यम् । भवान्, किञ्चित् = किमपि, तुन्दिमः = तुन्दिलो-

ऽस्ति, इति = अत एव बालमेनम् = बालकमिमम्, रक्षितुम् = त्रातुम्, न = नहि, पारयिष्यते = समर्थोभविष्यति, तद् = अत एव, अहम् = पुरोहितः, पृथुकमेनम् = बालमेनम्, आत्मना सह = स्वेन सह, गोपायिष्यामि = पास्यामि" इत्येवम्, व्याहृत्य = कथयित्वा, स्वपृष्ठदेशे = स्वपृष्ठभागे, उत्तरीयेण = प्रावरणेन, अतित्रस्तम् = अत्यधिकभीतम्, रामसिंहम्, दढं बद्ध्वा = दृढ़तया संग्रथ्य, कार्पासभारमेकम् = एकं तूलपोटलिकाम्, अनाय्य तस्मिन् = कार्पासभारे, दत्तम् हस्तावलम्बनम् = कराश्रयो येन, (सः पुरोहितः) तस्थौ = अतिष्ठत् । अहमपि च = ब्रह्मचारिगुरुरपि च, तथैव = पुरोहितमिव, विहितवान् = आचरितवान् । द्वावपि च आवाम्, परमेश्वरम् स्मरन्तौ = चिन्तयन्तौ, परितः सर्वतः, दोधूयमानस्य = अतितरां कम्पायमानस्य, उदन्वतः = वारिनिधेः, दोदुल्यमानैः = अत्यन्त चलद्भिः, लोललोलैः = अतिचञ्चलैः, कल्लोलैः = महोर्मिभिः चङ्क्रम्य-माणौ = अतितरमुच्छाल्यमानौ, कर्हिचित् = कदाचित्, लोकस्य = संसारस्य, आलोकम् = प्रकाशम्, आकृष्य = अपकृष्य, लोकालोकम् = चरमाचलान्तिकगिरिम्, उल्लंघयिषुम् = उल्लङ्घयितुमिच्छुम, अस्ताचलस्य = चरमगिरेः, चूडाचुम्बिनम् = उन्नतभागाश्लेषिणम्, लोकलोचनम् = जननेत्रम्, आलोकमालोकम् = दृष्ट्वा, दृष्ट्वा, कदाचिद्, वाष्पबिन्दुस्नातश्मश्रुम् = अश्रुक्लिन्नमुखकेशम्, पुरोहितम्, रोरूद्यमानम् = बारं बारं रुदन्तम्, अस्माभिः स्वयं रोदनोन्मुखैरपि, कथमपि = येन केनापिप्रकारेण, बोबुध्यमानम् = मा बिभेहि, त्वां पारं प्रापयिष्यामः = इति शिक्ष्यमाणम्, बालकम् = बालम्, च, दर्शंदर्शम् = अनुवारंपश्यतः, युगमिव = कलिप्रभृतिमिव, मन्वन्तरमिव = दिव्यानां युगानामेकसप्ततिः कालमिव, कल्पमिव च = एकसहस्रमहायुगात्मकं कालमिव च कांश्चित्, क्षणान् = मुहूर्त्तान्, अजीगमाव = अक्षपयाव ।

**पृष्ठ—245. अथ शनैः समुद्रफेनेष्विव लीयमानेषु———इत्यादि ।**

**सन्दर्भ**—गौरसिंहस्यानुरोधेन ब्रह्मचारि गुरुः, अतीतकथां कथयन् भणति यत् समुद्रे पोते निमग्ने सति कथं मम चक्षुया पुरोहितोऽगोचरः संवृत्त इति ।

**व्याख्या**—अथ = तदनन्तरं, शनैः शनैः, समुद्रफेनेषु = पयोधिडिण्डीरेषु इव, तारकानिकरेषु = भगणसमूहेषु, लीयमानेषु = अन्तर्हितेषु, प्रतीच्यां = पश्चिमायां दिशि, उडुपे इव = नावीव, उडुपे = चन्द्रे, निमग्ने, सरस्वतः = अर्णवस्य, तरङ्गोच्छालितान् = लहर्युत्थापितान्, तोयकणान् = जलविन्दून्, माणिक्यानीव = मौक्तिकानीव, विदधत् = कुर्वत्, प्राचीम् = पूर्वां दिशम्, वलाहकनिकराकान्तामिव = जलद समूह व्याप्तामिव, भगवान् भास्करः = सूर्यः, अकार्षीत् = कृतवान् । अस्मिन् समये = तत्काले, वीचिक्षोभः = लहरि संचलनम्, अतिमन्दम् = अतिमन्थरम् आसीत् इति हेतोः सुदूरं वीक्षितुम् = अति दूरं द्रष्टुम्, अहं ब्र चारिगुरुः, अपारयम् = शक्तोऽभूवम्, उद्ग्रीवेणापि = उत्कन्धरेणापि, विस्फारितचक्षुषापि = आयतीकृतलोचनेनापि, मया पुरोहितः गणेशशास्त्री, भूभागो वा = महीतलम् वा, नालोकि—न दृष्टः ।

**पृष्ट—258, एवं विलक्षणा संवृत्ता दैवघटना यदेकतरित्यादि ।**

**सन्दर्भ**—काव्यस्य नायिका नायकादयः तथाऽन्ये पाआः एकत्रस्थितापि, अन्योऽन्यं विना दुःखमनुभवन्ति, एवंभूतासु कथासु कविः वर्णयति, दैवघटना ।

**व्याख्या**—एवं = प्रकारेण, विलक्षत्रा विचित्रा, दैवघटना = ईश्वरेच्छा, संवृत्ता = जाता, यत्, एकतः = एकत्र, पुत्रवियोग दुःखितः = सुत विश्लेषखिन्नः, पुनः = भूयः तत्प्राप्तये सुतसम्मेलनाय, साधनविशेषम् अनुष्ठानविशेषम् अनुतिष्ठन् कुर्वन्, वीरेन्द्रः = ब्र चारि गुरुः, अवसीदति = खिन्नोऽस्ति । अन्यतः = अपरतः, सौवर्णी-विवाह-

चिन्ताग्रस्तौ = कौसलापरिणय चिन्ताव्याप्तौ, रामसिंहस्य = रघुवीर-सिंहस्य, आलुलोकयिषया = द्रष्टुमिच्छया, लोलुपे = उत्कण्ठिते, लोचने = नेत्रे ययोः तौ, गौरश्यामौ = युगलौ भ्रातरौ, विषीदतः = विषादं कुरुतः, परतः = अन्यत्र, रघुवीराय = रामसिंहाय, लज्जया = त्रपया, विरहय्य = वियोज्य, वितीर्णेव = दत्तेव, उत्कण्ठया = आध्यानेन, समाकृष्य = आकर्षितं भूत्वा, समर्पितेव = कृतसमर्पणा इव, इन्द्रियगणेन = इन्द्रियसमूहेन, कुसुमेषुघातैः = पुष्पेषु ताड़नैः, वशंवदाम् = आधीनाम्, विधाय = कृत्वा, विनिवेदितेव = नम्रतया प्रदत्ता इव, मदनेन = कामेन, किङ्करीकृत्य = दासीं विधाय, अपहृत्येव = कृतापहरणेव, कामेन = मदनेन, दुर्मदस्य = दुर्दमनीयस्य, मदनस्य = मनसिजस्य, मदैः मामाद्यमाना = अतितरां माद्यन्ती अपि = अधिकं यथा स्यात् तथा, सम्मदय्य = मत्तां विधाय, प्रदत्तेव = प्रमत्तेव, अनुरागेण = प्रेम्णां, सकलगुणगणान = निखिलगुणसमूहान्, विगणय्य = अनादृत्य, बिक्रीतेव = केनापि विक्रयं नीतेव, हृदयेन = मानसेन, रघुवीरं = रामसिंहं, चिन्तयन्ती = ध्यायन्ती, कोसला = सौवर्णी, दिवसान् = दिनानि, गणयति = गणनांकरोति ।

अत्र गद्ये उत्प्रेक्षालंकारः ।

**पृष्ठ 268—अथ ततो——व्याहार्षीत ।**

अथ = अनन्तरम् ततः = पुण्यनगरात्, निवृत्तः सः मायाजिह्मः, तत्रत्यान् = तत्रस्थितान् विजयध्वजान् = विजयपताकान् आलोक्य = दृष्ट्वा, किञ्चिच्च, अन्तर्गत्वा = अन्तः प्रविश्य, शस्तिखान = शिरोभूषणादीनि = शस्तिखाननाम सेनापतेः शिरसोऽलङ्काराः, इत्येवमादीनि, बहूनि = अनेकानि वस्तुजातानि, दृष्ट्वा = निरीक्ष्य, ह्रीण इव = सलज्ज इव, हतोत्साह इव = विगतधैर्य इव, चकित इव, = विस्मितो जात इव च, ततोऽपि = सिंहदुर्गादपि निवृत्तः, पथि = मार्गे, महदेकम् = सुदीर्घमेकम्, महाप्रघणम् = वृहद्वहिर्द्वार प्रकोष्ठकं यस्मिस्तादृशं महाप्रघणम्, शारदस्य = शरदि-भवस्य, घनस्य = सांद्रस्य, घनाघनस्य =

वर्षुकमेघस्य = विडम्बना = अनुकृतिर्यस्य तत् भवनम् = विशालभवनम् अद्राक्षीत् = अलोकत । तत्र = तस्मिन् भवने, प्रविश्यप्रवेशं कृत्वा च, रजतेन = रौप्येण, कनकेन च = सुवर्णेन च, निर्मीयमाणाः = बिरच्यमानाः, शिवराजनामाङ्किताः मुद्राः निष्काणि = सुवर्णमुद्राः च, दृष्ट्वा = ईक्षित्वा, ततः = भवनात्, प्रचलितः, राजदुर्गम्, आससाद = आगच्छत्, दूरादेव = दूरत एव, दुर्गस्य = प्रासादस्य, समीपवर्तिनि = अविदूरभाविनि, प्रशस्ते शाद्वले च = घासे च, परःसहस्रान् = सहस्राधिकान्, अश्वारोहान् = सादिनः, उन्मुखयन्तम् = अभिमुखयन्तम्, भ्रामयन्तञ्च = चालयन्तञ्च, महान्तम् = विशालकायम्, कर्कम् = श्वेतमश्वम्, आरूढम् = पृष्ठे स्थितम्, युवानमेकम् = विशेषयुवकम्, समवलोकत् = समलोकयत् । कोऽसौ = अयं कः, इति, पृष्टश्च श्यामसिंहः = श्यामसिंहमपृच्छत् ततः श्यामसिंहेनोक्तम् = कुमार ! एष मे = ममायम्, ज्येष्ठः = अग्रजः भ्राता, महाराष्ट्रराजस्य = महाराष्ट्राधीशस्य च, अन्यतमः = अन्येषु सेनापतिषु एकः सेनापतिः = सेनाध्यक्षोऽस्ति-इत्येवम्, व्याहार्षीत् = अब्रवीदिति ।

इति अष्टमो निश्वास :

## अथ नवमो निश्वासः

**पृष्ठ—1. येनामन्द मरन्दे——मधुकरेण कथम् ।**

**सन्दर्भः**—श्री अम्बिकादत्त व्यासः नवमे निश्वासे भाविनीं दिल्ली वल्लभतामाशङ्कमानः पण्डितराजस्य पद्येन उपक्षिपति । येनामन्द मरन्दे—येन मधुकरेण, अमन्दमरन्दे, दलदरविन्दे दिनानि अनायिषत, हा खलु तेन कुटजे ईहा कथम् तेने ? इत्यन्वयः ।

**व्याख्या**—येन = भ्रमरेण, मधुकरेण, द्विरेफेन, अमन्दमरन्दे = प्रचुर मकरन्दे, दलदरविन्दे = विकसित कमले, दिनानि = रसास्वादन पराणि दिवसानि, अनायिषत = व्यतियापितानि, हा = कष्टम्, खलु = निश्चयेन, तेन = मधुकरेण, (नतु परेण) कुटजे = पार्वतमल्लिकायाम्, ईहा—इच्छा कथं = केन प्रकारेण, तेने—विस्तारिता ।

**भावार्थ**—धीर वीर स्वभावःपरमोदात्त गुण-गरिष्ठः शिवः जयसिंहसेनासहयोगात्मके महति संकटे समुत्पन्ने कथं सन्धित्सां कृतवान् ? येन शिवेन बाल्यादारभ्य यवनैः सह युद्धं कृतम्। तेनैव तस्य वशंवदता, तेन सह सन्धिश्च, जयसिंह कथनानुसारेण सहसा स्वीकृतेति महदाश्चर्यम् तथापि देवी विचित्रा गतिरिति समाधानम्।

**पृष्ठ—2. ॠतुरेष शरत्। साम्प्रतं ? पुण्यनगर प्रान्ते——**

**सन्दर्भ**—निश्वासस्यारम्भे, शरदर्तौ, बसन्तानुरूपां शोभां वर्णयित्वा किमपि भावि अशुभं संसूचयति कविः। ॠतुरेष शरत्-इत्यादि।

**व्याख्या**—एषः = अयं ॠतुः, शरत् = इति नाम्ना प्रसिद्धः, साम्प्रतं = अधुना, पुण्यनगरप्रान्ते = पूनेतिनगरोपकण्ठे, अकालेऽपि = असमयेऽपि, वसन्त इव = मधुमास इव, पुंस्कोकिलाः = पिकाः, काकलीकलरवैः— समधुर पञ्चमस्वरैः, दिगन्तम् = दश दिगन्तरालम्, वधिरयन्ति = शब्द श्रुतिशून्यं कुर्वन्ति, मिलितेन = संयुक्तेन, मलयानिलेन = मलयवायुना, लोलाः = चञ्चलाः, लवङ्गलताः = देवकुसुम व्रततयः, दोलन्ति = कम्पन्ते, मधुगन्धेन = मकरन्द परिमलेन, अन्धानाम् = मत्तानाम्, मधुकराणाम् = द्विरेफाणाम्, व्रातेन = समूहेन, विधूताः = संचालिताः, मकरन्द मञ्जर्यः = रसालपुष्पगुच्छाः, माञ्जुल्यम् = सुन्दरताम् वमन्ति = उद्गिरन्ति। नितान्त विरह क्लान्तः—अतिशय वियोगखिन्नः, परमश्रान्तः = अतिशयं स्थगितः शून्यस्वान्तः = विरहशून्यचित्तः, यः कान्ताजनः = प्रेयसीजनः स एव ज्वालाजटालः = कीलालालङ्कृतः, दावज्वलनः = दावाग्निः, तेन जाज्वल्यमानानाम् = अतिशयेन ज्वलताम्, अङ्गारकाणाम् = अग्नि स्फुलिंगानाम्, कदम्बमिव = समूहं इव, पाटलपटलम् = पाटलसमूहः, उल्लसति = शोभते। पुष्पपरागैः = सुमनरजोभिः, पीतः = पीतवर्णः, मकरन्दविन्दुसन्दोहैः = परिमल विन्दु समूहैः, आर्द्रः = क्लिन्नः, प्रफुल्ललतालिंगनैः = विकसित वल्लीसंश्लेषैः, शीतः = शीतलः, कुञ्जसंश्लेषैः = निकुञ्ज सम्पर्कैः च, धीरः = मन्दगतिः, समीरः = वायुः,

प्रवहति स्म = सरति स्म, दुःशकुन रूपत्वात् = अकालिक दुःशकुनत्वेन, आगामिभयस्य = भाविभीतेः, सूचकेऽपि = बोधकेऽपि, वसन्तप्रायत्वात् = मधुमास सदृशत्वात्, सुखमये = अकालरमणीये, अस्मिन समये = शरदर्तौ, तोरण दुर्गात् अवहुदूरं = अन्तिकम् पूर्वस्याम् = दिशि, कुसुमवाटिकायाम्— पुष्पोद्याने, स्वयं महाराष्ट्रराजः = शिववीरः एकाकी = असहायः, पर्यटति स्म = भ्रमति स्म, विहरति स्म ।

**पृष्ठ—10. महाराज ! न विद्मः को नाम व्याधिर्दुनोति ।**

**सन्दर्भः**—रसनार्यः सहचरी एका यवनी युवतिः शिववीरस्य समीपं समागत्य, राजकुमार्याः मदन-व्याधि-विषये संकेतयति, महाराज ? इति ।

**व्याख्या**—महाराज = प्रभो, को नाम व्याधिः = मानसिक व्यथा, राजकुमारीं = रसनारीम्, दुनोति = संतापयति, इति न विद्मः = न जानीमः । अस्माभिः, = दासीभिः अतिसावधानतया दत्तावधानतया, सेव्यमानापि = कृतशुश्रूषापि, प्रतिक्षणम् = सततम्, अनिमिषपातं निरुद्ध-निश्वासम् = निर्निमेषश्वासं रोत-पुरस्सरम् च, ईक्ष्यमाणापि = अवलोक्य-मानापि, रोमाञ्चति = पुलकं विभर्ति, स्विद्यति = घर्मजलं स्रवति, सीतकरोति = सकष्टं निःश्वसिति । ताम्यति = क्लिश्नाति, विलपति विलापं करोति, वेपते = कम्पते, उद्भ्रमति = उद्विग्ना भवति, रोदिति = क्रन्दते, ग्लायति = क्षीणहर्षा जायते, क्लिश्यति = दूयते, मुह्यते = मोहिता भवति, मूर्च्छति च = गत संज्ञा च भवति, धीरं = मन्दगतिं, समीरं = पवनम्, आसाद्य = लब्ध्वा, अधिकं खिद्यते = अतिशयं दूयते ; शीतमयूखम् = शीतल दीधितिम्, आलोक्य = दृष्ट्वा, अधिकं तप्यते = अतिशयं क्लिश्नाति, कोकिलकलरवम् पिककुहुशब्दम्, आकर्ण्य = श्रुत्वा, कर्णयोः = श्रोत्रयोः, तोद्यमानेव पीड्य-मानेव, कराभ्याम् = हस्ताभ्याम्, कर्णकुहरम् = श्रोत्रविवरम् पिधाय = समुद्रय, अन्तर्निलये = अन्तराले गच्छति ।

अस्माभिः = सेवकाभिः, हास्यमानापि = नर्मवचसां गोचरीक्रियमाणापि, न हसति = न रोदिति, विविधविलासरामणीयकेषु = क्रीड़ा सौन्दर्येषु, न रमते = न क्रीड़ति, पाटलिपटल कलिकामालामपि = पाटलीसमूहकोरक स्रजमपि, ज्वलनज्वालावलीमिव = दहनकीलालव्रजपङ्क्तिमिव, वेवेत्ति = अवधारयति, किं कथयामि = किमधिकं निवेदयामि, केवलं दक्षतो वामतश्च = सव्यापसव्यतश्च, परिवर्तनैः = वलनैः, दीर्घनिश्वासैः = लम्बोच्छ्वासैः, सजृम्भाङ्गुलिस्फोटनैः = गात्रविनामाङ्गुलित्रोटनैः पुरस्सरम् सा = राजकुमारी, क्षपाम् = रात्रिम्, क्षपयति = यापयति ।

अत्र गद्ये उत्प्रेक्षालंकारः ।

पृष्ठ — 52 **वीरवर ! वयमपि धर्मार्थमेव प्राणान् न गणयामः ।**

सन्दर्भ—श्री जयपुराधीशस्य जयसिंहस्य वचनैः कुलीनाः प्राणान् अगणयन्तः धर्मं रक्षन्ति, कपटाचरणैः न, इति श्रुत्वा शिववीरः कुपित इव उत्तरति वीरवर ? इति

व्याख्या :—वीरवर = महामान्य ? वयमपि = महाराष्ट्रीयाः, धर्मार्थमेव = धर्मरक्षार्थमेव, प्राणान् = असून् न, गणयामः = नापेक्षां कुर्मः, महाराष्ट्राः = अस्मदादयः, भीरवः = भयभीताः, न सन्ति = न विद्यन्ते । महाराष्ट्राः = वयमपि, स्वार्थं = स्वीयप्रयोजनाय, संग्रामम् = युद्धम्, न कुर्मः = न विदध्मः । किन्तु काश्यादिस्थानेषु = वाराणस्यादिषु, विहितान् = कृतान्, अत्याचारान् दुराचारान्, श्रावं श्रावं = भूयो भूयः श्रुत्वा, कर्णौ = श्रोत्रौ, स्फुट्येते = विद्ध्येते, हृदयं = चित्तं, विदीर्यते = बेभिद्यते, इति हेतोः एतान् अत्याचारान्, सोढुम् = मर्षितुम्, न शक्यते = न समर्थोऽस्मि । अतः यथासामर्थ्यं = यथाशक्तिं, सम्मुखम् = प्रत्यक्षम्, परतश्च = अन्तश्च युक्तिभिः—कौशलैः; विजयामहे = जयं कुर्मः । युष्माकं = भवदादीनाम्, सत्यम् = धर्मरक्षणव्रतम्, धन्यम् = विचित्रम्, यम् = सत्यम्, अवलम्ब्य = आश्रित्य, काशीस्थविश्वनाथ विन्दुमाधवादीनाम् = वाराणसीस्थ विश्वनाथ विन्दुमाधवादीनां-मन्दिराणां, मूलच्छेदकौतुकिनः = मठविध्वंसव्यसनिनः, व्यर्थहत्याकाण्डव्यसनिना = निरर्थकभारेण

कार्याभ्यासिनः, लम्पटाः = धूर्ताः, यवनाः प्रबलीक्रियन्ते = सबलाः विधीयन्ते, युष्मादृशैः = त्वत्सदृशैः, वीरवरैः = मुख्यवीरैः, गौरांगेण = महाप्रभुणा, विहितेन = सम्पादितेन, हरिकीर्त्तनेन = ईश्वरयशोगानेन, पूता = पवित्रा, बंगभूमिः = बंगाल प्रदेशः, म्लेच्छहतकानान् = यवनानाम्, हस्ते = पाणौ, समर्पिता = दत्ता । अधुना = सम्प्रति, गवां-ब्राह्मणानम् = गोविप्राणाम्, रक्तैः = रुधिरैः, स्नाति = स्नानं करोति । महाराज = श्रीमन्, दृश्यताम् = पर्यालोच्यताम्, धर्मशास्त्रम् — मन्वादिशास्त्रं, हत्यासहाय्यमपि = प्राणहरणे कृते सहायकत्वमपि, हत्याविशेष एव = हत्यातुल्य एव ।

**पृष्ठ—105. प्रभो ! स्वामिनोऽन्नेन पुष्टमिदं शरीरमित्यादि ।**

**सन्दर्भः**—विलम्बस्य कारणं अकथयति रघुवीरे महाराष्ट्रराजस्य शिववीरस्य यस्यैवं मधुरा गीः, "यस्यैव पराक्रमः, स एव च्छली" इति वाक्यं श्रुत्वा रघुवीरसिंहः महाराष्ट्रराजं कथयति प्रभो इति ।

**व्याख्याः**—प्रभो ! = महाराज ! स्वामिनः = भवतः, अन्नेन = अम्भसा, इदं = शरीरम् = देहोऽयम्, पुष्टम् = संवर्धितम्, स्वामिन एव = भवत एव, कृपाणेन = खड्गेन, विलीढम् = विनष्टम् भवतु । यस्य = स्वामिनः, तोषः = प्रसन्नता, चिरं = बहुकालम्, अजीवयत् = प्राणान् अधारयत् तस्यैव = स्वामिनः, रोषम् = कोपम्, व्यापादयतु = मारयतु । नाहं प्राणरक्षार्थम्, यते = प्रयत्नं करोमि, नवा अपराधक्षमां याचे = याचितुं वाञ्छामि, किन्तु यत् सत्यम् = तत्त्वम् तद् ब्रवीमि = कथयामि, नाहं = रघुवीरः, स्वामिविद्रोहापराधी = प्रभुविद्रोहकर्त्ता, न वा छलम् = कपटम्, जाने = जानामि, किन्तु न जाने-केषां-दुरदृष्टानाम् = दुर्भाग्यानाम्, फलस्वरूपः = परिणामजन्यः, मे = मम, विलम्बः = विलम्ब जन्यापराधः, समभूत् = जातः । इति सत्यम् कथयामि विलम्बापराधस्य = एतद् दोषस्य, जीविकाच्छेदः = अनुचरताकार्यविच्छेदः, शिरश्च्छेदो वा = मस्तककर्त्तनम् वा, यथा रोचते = इच्छति, तथा दण्डो विधेयः = दण्डः कार्यः । विद्रोहाचरणन्तु = विरुद्धाचरणन्तु न कृतवानस्मि ।

**इति नवमो निश्वासः**

## अथ दशमो निश्वासः

**प्रश्न—127. समयोऽय शरदन्तस्य, ऋतुरेषु हिमः, शीतलः समीरः—**

**सन्दर्भ :**—अथैकदा शरदन्तस्य समये पुष्पोद्याने तिस्रः वालाः उपविष्टाः आसन् । द्वे क्रमशः सौवर्णीं रघुवीर निर्वासनखिन्नां आश्वासयतः स्म । तत्र कवेरुक्तिः समयोऽयमिति—

**व्याख्या :**—अयम् = एषः, शरदन्तस्य = शरदर्तोः समाप्त प्रायस्य, समयः = कालः । एष = आगामी ऋतुः, हिमः = हेमन्तः ; अतः शीतलः = हिममयः, समीरः = पवनः, सरति = वाति !

साम्प्रतं = द्विगुणीभूतं, वस्त्रम् = वसनम्, रोचते = भाति । चिरमरुणा = अतिशय लोहिता, सन्ध्या = सायम्, रात्रीभूता = रात्रितां गता, सन्ध्या काल एव रात्रिवद्भासते इत्यर्थः । ईदृशे = एवम्भूते, समये = काले, तोरणदुर्गसमीपे, = तोरण दुर्गस्यासन्ने, हनुमन्मन्दिरात् = मारुति मठात्, पूर्वतः = पूर्वस्यांदिशि, पुष्पवाटिकायाम् = पुष्पोद्याने, आसन्दीषु = वेत्रासनिकासु, तिस्रः = त्रिसंख्याकाः, वालाः = युवतयः, उपविष्टाः = आसीनाः, परस्परम् = अन्योऽन्यम्, एवं = ईदृशं, आलपन्तिस्म = वार्तालापं कुर्वन्ति स्म ।

**पृष्ठ—145. वीर ! राजपुत्रदेशीया राजानोऽप्येते—**

**सन्दर्भः**—रघुवीर निर्वासनानन्तरं महाराष्ट्रराजः शिववीरः एकदा भटवेषेण स्वप्रजाम् अवलोकयितुं पर्यटति स्म । सहसा द्रुमनिचयतः एकः संन्यासी समागत्य शिवं कथयति वीर ! राजपुत्रदेशीयेति—

**व्याख्या :**—वीर = श्रीमन्, एते = जयसिंहादयः, राजपुत्रदेशीयाः = राजपुत्रप्रान्तस्थाः, क्षत्रियाः = राजानोऽपि = भूपतयोऽपि, कन्यादानैः = सुतार्पणैः, आत्मानम् = स्वात्मानम्, यवनैः = विधर्मिभिःसह, सम्बध्नन्तः = सम्मेलयन्तः, अर्धयवनाः = म्लेच्छाः एव सञ्जाताः, ये = क्षत्रियाः, स्वतन्त्रान् = स्वाधीनान्, आर्यदेशान् = भारतीय प्रदेशान्, विजित्य =

वशंवदान् विधाय, यवनहस्ते = म्लेच्छशासककरे, समर्पयन्तः = तच्छासनाधीनं कुर्वन्ति, वीरंमन्यतया = भटम्मन्यतया, श्मश्रु = मुखरोमराजि (मूछें इति प्रसिद्धम्) परिमृशन्ति = सगर्वं स्पृशन्ति, इयं = एषा, धन्यता = श्रेष्ठता, जघन्यता = नीचता वेति, अत्र = अस्मिन् विषये, श्रीमद् हृदयमेव = भवतश्चित्तमेव प्रमाणम् = निदर्शनम् ।

अयं कः = कीदृशोऽयं, मानसिंहस्य = एतदाख्यस्य राज्ञः, मानम् = महत्त्वम् आसीत् यत्, यवनार्थम् = म्लेच्छप्रयोजनाय, उदयपुराधीश्वरम् उदयपुरशासकं, सकलभारताभिजन मान्यम् = सम्पूर्णहैन्दव निवासिमाननीयम्, मेदःपाटपरिवृढम् = मेवाड़ाधीश्वरम्, अत्यन्तम् = नितराम्, चिक्लिशत् = क्लेशितवान्, तस्यैव = मानसिंहस्य, अध्वनि = मार्गे, अध्वन्यः = पथिकः, एष = जयसिंहः, ढुण्ढारवन्याः = एतदाख्यारण्यस्य, अवन्यध्यक्षः = पृथिवीपतिः जयसिंहः (अस्ति) अस्य = भूपतेः, मायामयीम् = प्रवञ्चनामयीम्, मन्त्रणाम् = परामर्शम्, श्रीमान् = भवान्, मा = नहि, ऊररीकरोतु = स्वीकरोतु ।

**पृष्ठ—159. समयोऽयं महामहिम-हिमाच्छन्न शिशिरस्येत्यादि ।**

**सन्दर्भ :**—श्री जयसिंह कथनानुसारेण महाराष्ट्रराजो शिववीरः राघवाचार्यैः भूयोभूयः निवार्यमाणोऽपि, अवरंगजीवस्य साक्षात्कारणाय दिल्लीं गच्छति स्म, तत्र कविः ऋतुवर्णनमिदं प्रस्तौति समयोऽयमिति ।

**व्याख्या :**—महामहिम्ना = अतिशय प्रभावेण, हिमेन = प्रालेयेन, आच्छन्नस्य = आवृतस्य, शिशिरस्य—एतदाख्य ऋतोः, अयम् = एषः समयः = कालः (अस्ति) एतेन = अनेन, ऋतुना = शिशिरेण, दिनानाम् दिवसानाम्, परिणाहः = विशालता, तमीनां = रात्रीणाम्, तनुता = लघुता, पयोजानाम् = कमलानाम्, प्रसन्नता = विकासशीलता, सलिलानाम् = जलानाम्, सुखेन-आनन्देन, अवगाहता = स्नानयोग्यता लुण्ठिता = चौरिता, भगवान् भास्करः = सूर्यः, अनेन दक्षिणस्यां = दिशि, निर्वासितः = निस्सारितः, गगनतलम् = आकाशमण्डलम्, प्रायिकैः = प्रायोभवैः प्रालेयपातैः = हिमपातनैः, धूम धूसरितम् = धूम मलिनमिव, विहितम् = कृतम् ।

साम्प्रतं = अधुना, तैलम् = स्नेहः, तापः = वह्न्यादिजन्यः, तूलिका = तूलवती, तरुणी = युवतिः, ताम्बूलम् = नागवल्लीदलम् इत्येषु एव कृतादराः = कृत प्रणयाः जनाः (दृश्यन्ते)।

जगत् प्राणः = वायुः, जगति = संसारे, प्राणिनः = जनान् जड़ीकुर्वन्, स्तब्धीकुर्वन्, जवेन = वेगेन, वहति = सरति।

आखण्डलदिक् = इन्द्रसम्बन्धिनीदिक्, कुण्डलकतामात्रम् = कर्णभूषणता मात्रम्, उपेयुषः = प्राप्तवतः, शुकतुण्डच्छवेः = कीराननकान्तेः, मार्तण्ड मण्डलस्य = सूर्यमण्डलस्य, अचण्डानाम् = अकठोरणाम्, मरीचीनाम् = किरणानाम्, कोमलमुत्तापम् = मृदुलमौष्ण्यम्, सिषैवयिषूणाम = सेवितुमिच्छूनाम्, शाद्बलेन = घासमयेन, पथा = मार्गेण, प्रयातानाम = गतानाम्, वन्यजन्तूनाम् = आरण्यकजीवानाम, पादक्षेप विहिताः = चरणपातदलिताः नैशीथानाम् = रात्रिपतितानाम्, मिहिकाप्रचयानाम् = हिमनिकराणाम्, भङ्गाः एव = छेदाः एव, आखेटक्रीडाकौतुकिनाम् = मृगया-व्यसनिनाम्, पन्थानम् = मार्गम्, उपदिशन्ति = प्रकटयन्ति।

सुन्दरीणाम् = वनितानाम्, संसर्गेण = सम्पर्केण, रहितमपि = शून्यमपि, इदं वीरमण्डलम् = शूरकदम्बम्, प्रायिकः = प्रायोभवः सीत्कारः = शब्दविशेषः, यस्मिन् तम्, व्रणिताधरम् = खण्डितोष्ठं, सरोमाञ्चम् = सपुलकम्, सवेपथुः = सकम्पनम्, चास्ति = विद्यते।

अत्र गद्ये स्वभावोक्ति अलंकारः।

**पृष्ठ—164. रात्रौ सर्वेषु सुप्तेषु एकाकी महाराष्ट्र-महनीयः।**

**सन्दर्भः**—ससहायः शिववीरः दिल्लीतः कियद्दूरे यमुनातटे उपकारिकामायोज्य स्थितः। एकदा-रात्रौ, माल्यश्रीकेण सह पाषाणखण्डे समुपविश्य दिल्लीं दृष्ट्वा विचारयतिस्म। तदेव वर्णयति वर्णनं कविः, रात्रौ सर्वेषु सुप्तेषु इत्यादि।

**व्याख्या**—रात्रौ = निशायाम्, सर्वेषु = निखिलेषु, सुप्तेषु = निद्रावशंगतेषु, एकाकी = असहायः, महाराष्ट्रमहनीयः = महाराष्ट्र पूजनीयः, माल्यश्रीकः सहायो यस्य सः, माल्यश्रीकसहायः = समाल्यश्रीकः, बहिः, निर्गत्य =

वहिरागत्य, यमुनातटे = कालिन्द्यास्तीरे, प्रालेयस्नाते = हिममण्डिते, पाषाणखण्डे = शिलाखण्डे, समुपविष्टः = समासीन आसीत् । कदाचित् = कस्मिन्नपि समये, श्यामश्यामैः = अतिकृष्णैः, तरङ्गपटलैः = लहरीसमूहैः, वहन्तीम् = सरन्तीम्, यमुनाम् = कलिन्दीम्, कदाचन् = कदापि, गगनमहासागरस्य = नभोमहोदधः, फेनपटलैः = डिण्डीरसमूहैः इवाचरितम्, तारकापाटलम् = भगणसमूहम्, पश्यन् = अवलोकयन्, कर्हिचन दीपप्रचयेन = प्रदीपसमूहेन, सूचितानि = व्यक्तानि, प्रासादमण्डलानि = हर्म्यसमूहाः, यस्यास्ताः, यवनराजधानीम् = म्लेच्छराज्यनगरम्, निभालयन् = अवलोकयन्, मुहूर्तं = क्षणम्, निभृतं = निःशब्दं, अवतस्थे = स्थितवान् । परतः—तदनन्तरं, समवोचत् = उवाच, मित्र = सखे, इयमेव = दृश्यमाना राजधानी, क्षत्रियकुल भूषणानां = क्षत्रियान्वयालंकाराणाम्, युधिष्ठिरादीनाम् = पाण्डवनाम् आसीत्, अत्रैव = दिल्यां, पृथ्वीराजोऽपि = एतन्नामा क्षत्रियशासकोऽपि, चरमवीरः = अन्तिमक्षत्रियवीरः, उवासं = निवासं चकार । एतस्याः = दिल्याः एव नाम, श्रावंश्रावं = भूयोभूयः श्रुत्वा, हीरातः ईरानदेशीयाः, कम्बोजाः = काबुलदेशीयाः, गान्धाराः = गन्धारदेशीयाः, समरकन्द प्रभृति देशवास्तव्याः = एवं प्रसिद्ध देशवास्तव्याः, स्वप्नेष्वपि = निद्रास्वपि स्वप्नगतेष्वपि, पलायध्वं पलायध्वमिति विलेपुः = विलापं चक्रुः । सैवेयम् = राजधानी दिल्ली, तद्देशवासिभिः = तत्तद्देशनिवासिभिः, कदर्य्यैः = नीचैः, भुज्यते = शास्यते । अहह = आश्चर्यम् तत्रैव = नगरे, एषः = ईदृशः, सनातनधर्मस्य = वैदिक धर्मस्य, तिरस्कारः = अनादरः ।

अत्रैव = अस्मिन्नेव नगरे, मया = शिववीरेण प्रवेष्टव्यम् । भगवान् ईश्वरः, भव्यम् = कल्याणं, विदधातु = करोतु ।

अत्र रूपकालंकारः ।

इति दशमो निश्वासः

## अथैकादशो निश्वासः

**पृष्ठ—196 उपकारिणि विस्रब्धे, इत्यादि—**

**सन्दर्भ—एकादश निश्वासस्य कथाक्षेपकं शिववीरस्य निग्रहमधिकृत्य**

हितोपदेशस्य पद्यमिदं प्रस्तौति कविः।

उपकारिणि विस्रब्धे शुद्धमतौ, यः पापम् समाचरति, वसुधे? असत्यसन्धम् तम् जनम् कथं वहसि = इत्यन्वयः।

**व्याख्या**—उपकारिणी = कृतमहोपकृतौ, विस्रब्धे = विश्वस्ते, शुद्धा मति = कपटरहिता, मतिः = बुद्धिः, यस्य तस्मिन् = शुद्धमतौ = अकपटबुद्धौ, यः = निर्विवेकैः, कृतघ्नः पापम् घृणिताचारम् समाचरति = विदधति, तम् = पूर्वोक्तम्, जनम् = मनुजम्, कथं = केन प्रकारेण, वहसि = धारयसि, वसुधे = वसुन्धरे, ईदृशं मनुष्यं मा धारय।

**भावार्थ**—अयमेव शिवः यः कियदेव पूर्वं दिल्लीवल्लभस्य अवरंगजीवस्य, तनयां = रसनारीं, तनयं मायाजिह्वं च समार्पयत्। निज महतीं वीरतां गोलखण्डदुर्गविजये प्रादर्शयत्। शिववीरकृते एते सर्वे उपकाराः अवरंगजीवस्य सम्मुखे विद्यन्ते। तत्र यादृशमुपकारं शिवः कृतवान् तादृशम् तत्समये नाऽन्यः कोऽपि कर्तुं समर्थ आसीत्। सर्वमिदं एकपदे दिल्ली वल्लभः अवरंङ्गजीवः व्यस्मार्षीत्। हितोपदेशीयेन पद्येन अयमेवाशयः प्रकटीकृतः कविना।

**पृष्ठ—198. निशीथप्राया रजनी उष्णः काल इत्यादि।**

**सन्दर्भ**—निश्वासरम्भे चिन्ताव्याकुलः शिवः रात्रौ निद्रां नालभत, इति वर्णनात्प्राक् कविः उष्णकालमधिकृत्य वर्णयति = निशीथप्राया रजनीति।

**व्याख्या**—निशीथप्राया = प्रायोऽर्धरात्रिः, उष्णःकालः = ग्रीष्म समयः, समीरः = वायुः, न सरति = न चलति, गृहे-गृहे = भवने-भवने वालानाम् = शिशूनाम्, रोदनस्य = क्रन्दनस्य, आर्तनादः = उच्चशब्दः, व्यजनचालनस्य = वृन्तनस्य च, सणत्कारः = सणसणेतिशब्द विशेषः, निद्रया-मन्थराः, तान् निद्रामन्थरान् = आलस्ययुक्तान्, जनान् अपि, व्याकुलयति = उद्वेजयति। जलम्-जलम् = सलिलं सलिलम्, हिमम्-हिमम् = प्रालेयम् प्रालेयम्, वातोवातः = वायुःवायुः, दाड़िम्वरसः दाड़िम्वरसः

=फलरसो फलरसः' उशीरमुशीरम् =नलदं नलदम्, पाटलोदकम् पाटलोदकम् =गुलाबजलमिति प्रसिद्धम्, चन्दनचूर्णम् =श्रीखण्डादि पिष्टम् इति, मशकाः मशकाः =क्षुद्रजन्तु विशेषाः, मत्कुणाः मत्कुणाः =रक्तवीजाः रक्तवीजाः, कण्डू-कण्डू =खर्जू :खर्जू :, स्वेदः-स्वेदः = घर्मजलम्-घर्मजलम्, अट्टेभ्योः =गृहेभ्यः, ध्वनिः =शब्दः, श्रूयते =आकर्ण्यते।

तावत् =तदभ्यन्तरे, भेरीनादसहचरितेन =ढक्काशब्द सहितेन, वंशीनादेन =वंशीरवेण मध्यनिशीथसूचकः =अर्धरात्रिबोधकः, बिहागरागः =एतन्नामको राग विशेषः, आलापः =शब्दविशेषः, समारब्धः =आरब्धोऽभूत्। क्वचित् =कुत्रापि, नवोढानाम् =नवविवाहितानाम्, मंजीर किङ्किणी नूपुर वलयानां =तत्तत् आभूषणविशेषाणाम् शिञ्जितम् =मिलितशब्दम्, अश्रूयत =कर्णविषयो जातः। एतस्य =पूर्वोक्तस्य, रसस्य = शृंगारस्य, भञ्जकः =मर्दकः, प्रहरिणाम् =रक्षकाणाम् 'जागृहि भो जागृहि गाढ़ोऽयमन्धकारः' इति =एष, कर्णकषायः =कर्णकटुः, नादः, =शब्दः आकर्णि = अश्रूयत।

अत्र गद्ये स्वभावोक्तिरलंकारः।

**पृष्ठ—207 वीरवर भवत्प्रजासु के न भवन्तं प्राणाधिकं मन्यन्ते।**

**सन्दर्भ**—दिल्लीं गत्वा अवरङ्गजीवस्य भवने नियन्त्रितः शिववीरः चिन्ताग्रस्त आसीत्। तदा राघवाचार्यः समागत्य तत्रत्य कुशलादिकञ्च विनिवेद्य शिववीरं कथयति वीरवर ! इत्यादि।

**व्याख्या**—वीरवर =महाराज ! भवत्प्रजासु =युष्माकं जनतासु, के =जनाः भवन्तम् =श्रीमन्तम् प्राणाधिकम् =प्राणाधिकप्रियम्, न = नहि, मन्यन्ते =जानन्ति। संप्रति =अधुना, क्वचन =कुत्रापि, महारुद्रमुद्रया =महारुद्रयोगेन विधिना, रुद्रः =शिवः अभिषिच्यते =अभिषिक्तः क्रियते। क्वचन =कुत्रापि, सहस्रैः =सहस्र संख्याकैः, गृहीतं =धृतम्, ब्रह्मचर्यः =मैथुनादित्यागः यैः, तेषां =गृहीत-ब्रह्मचर्य्याणां =स्वीकृतब्रह्मचर्यनियमानाम्, ब्राह्मणानां =विप्राणाम्, समन्त्रैः सम्पुटम्, यथा स्यात् तथा, चण्डीपाठैः =सप्तशतीमन्त्रजपैः, भगवती दुर्गा महामाया, आद्रियते =

प्रसन्ना क्रियते । क्वचिच्च = कुत्रचित् ग्रहाणाम् = सूर्यादीनाम्, मात्रिकाणाम् = गौर्यादिषोडशसंख्यानाम्, आदीनाम् = योगिनीक्षेत्रपालादिनां, च मण्डलैः = स्थानैः मण्डितस्य = भूषितस्य, मण्डपस्य = पूजागृहस्य, अधस्तात् = अधः प्रदेशात्, वेदमन्त्रैः = वैदिकऋग्भिः, भगवान् वृहद्भानुः = अग्निः, हविषा = हवनीयेन, साकल्येन हूयते = तर्प्यते ।

किं ब्रवीमि = किं कथयामि । यदि = कदाचित् = अल्पमपि, भवदमङ्गलम् = भवदशुभं, श्रूयेत = आकर्ण्येत, तर्हि मन्ये प्रतीयते महाराष्ट्रैः कोपकृशानुहेतिभिः = क्रोधाग्निज्वालाभिः, अखिलं = सम्पूर्णं, भूमण्डलम् = पृथिवीमण्डलम्, भस्मसात् = वह्निसात् क्रियते ।

पृष्ठ—246. तदपि जाने आसन्नोऽयमाषाढमासः—

सन्दर्भः—कुमारमायाजिह्मः निजं पितरं अवरङ्गजीवं प्रार्थितवान् यत् एतद्देशीयवायुजलादिकं शिववीरस्य कृते नानुकूलमितिहेतोः सः रुग्णः, अतः तदस्मै स्वदेशे परावर्तितुमेवाज्ञा देया इति श्रुत्वा अवरङ्गजीवः उत्तरति तदपि जाने इति ।

व्याख्या—तदपि = एतदपि, जाने = जानामि, अयम् = एषः आषाढ़ इति नाम्ना प्रसिद्धः मासः, आसन्नः = समीपवर्ती अस्ति, नवजलदानाम् = नूतन वारिधराणाम्, जलपूरैः = जलप्रवाहैः, पूरिताः = भरिताः, सहस्रशः = सहस्राधिकाः, नद्यः = तरङ्गिण्यः, अजगरा इव = विशालकायसर्पा इव, सर्पिष्यन्ति, = गमिष्यन्ति, एते च महाराष्ट्रीयाः, अश्वयानाः = घोटकवाहनाः इमे-एते, दिल्लीतः = इन्द्रप्रस्थात्, प्रस्थिताः । नदीप्रवाहे = जलधारायां, पतिताः = निमज्जिताः, चेत् स्रोतोभिः = नदीभिः, धाराभिः, नीताः = अन्तर्गताः, नक्ष्यन्ति = विनाशं यास्यन्ति, तीरेषु = तटेषु, उषिताः = कृतवासाः, जलपातपीडिताः—वर्षणजलधाराभिः उद्वेजिताः, ज्वरग्रस्ताः = सज्वराः, शोचनीयां = विचित्रां दशां, यास्यन्ति = प्राप्स्यन्ति । मार्गेषु = पथिषु, वैद्यम् = चिकित्सकम्, अलभमानाः = अप्राप्ताः, पश्चात्ताप-तप्ताः = अनुतापखिन्नाः, को जानाति = कः ज्ञातु शक्नोति, कां दशाम् = कीदृशीमवस्थां, आसद्येरन् = प्राप्नुयुः । अत्रच = दिल्ली नगरे, मासेन =

मासपरिमाणेन, वायुजलम् = पवनजलादिकम्, अनुकूलमिव = उपयुक्तमिव जायते ।

ज्वरादिसम्भवे च = ज्वरावेशे सति, राजवैद्याः = राजकीयचिकित्सकाः; चिकित्साम् = उपचारं, विधास्यन्ति = करिष्यन्ति । चातुर्मासानन्तरं = वर्षंतु समाप्तौ, सुखेन = आनन्देन, स्वदेशं = निजदेशं, यास्यन्ति = गमिष्यन्ति ।

**पृष्ठ — 276 दिनमिदं प्रधान मोहरमोत्सवस्य गृहे-गृहे शोकसमाजः ।**

**सन्दर्भः**—कविः यवनानां प्रधानभूतस्य मोहरमोत्सवस्य वर्णनं प्रस्तौति तथा ग्रीष्मकालिकं सायं शोभाञ्चोद्घाटयति, दिनमिदमिति ।

**व्याख्या**—मोहरमोत्सवस्य मुहम्मद निर्वाणदिवसस्य, प्रधानं = मुख्यम्, इदं दिनम् = एतद्दिवसम् (विद्यते) अतः गृहे-गृहे = भवने-भवने, शोकसमाजः = शोकसभा क्रियते । स्थाने-स्थाने सर्वत्र, विलापगीतिगानम् = शोकप्रदर्शक गीतिगानम्, अद्य = सम्प्रति, न कस्यापि = जनस्य यवनस्य, विषयान्तरं = कार्यान्तरं, सन्धातुं = विचारयितुम्‘अवसरः = समयः (नास्ति) मोहरमोत्सवस्य, अनुषङ्गिणाम् = संसर्गिणाम्, हरितैः = हरितवर्णैः वस्त्रैः = वसनैः, दिल्ली = प्रसिद्धनगरीः हरिता-इव = हरिद्वर्णवती, इव, अभूत = अभवत् ।

अखिलं = निखिलं, भूवलयम्, = पृथिवीमण्डलम्, ज्वलयन्निव = दाहयन्तीव, भगवान् = ऐश्वर्यवान् भास्वान् = सूर्यः, स्व-स्वस्तिकम् = निजस्थान विशेषम्, आससाद = प्राप्तः । होराचतुष्टयेन = घण्टा चतुष्केण, गेहान् = गृहाणि, भ्राष्ट्रानिव = अम्बरीषाणीव, सन्ताप्य = प्रज्वाल्य, दिल्लीनगरवास्तव्यान् = इन्द्रप्रस्थ नगरनिवासिनः, तलगृहेषु = अन्तरालसदनेषु, प्रवेश्य = सन्निवेश्य, स्वयमपि, ग्रीष्मोत्तापितः = ग्रीष्मसंतापतप्तः, सिष्णासुरिव, = स्नातुमिच्छुरिव, मम = सूर्यस्य, तेजसा = धाम्ना, अस्य = यवनस्य न किमपि क्षीयते = क्षीणं न भवति इति हेतोः, सरस्वन्तम्, = सागरम्, सुशोषयिषुरिव = शोषयितुमिच्छरिव, स्वतेजसा = निजधाम्ना, वाडवम् = समुद्रम् विजिगीषुरिव = विजेतुमिच्छुरिव,

शेषफणाबलीनाम् = अनन्त नागस्फटामण्डलीनाम्, ज्वाल जालस्य = स्फुलिङ्गसमूहस्य, प्रचण्डताम् = तीक्ष्णाम्, आलोकयितुम् = द्रष्टुम्, पातालम् = अधोलोकम्, प्रविविक्षुरिव = प्रवेष्टुमिच्छुरिव, पाश्चात्यान् = पश्चिमभवान, पारस्यारब्यादि म्लेच्छदेशान् = आरब्यादियवन जन्मभूभागान्, दिधक्षुरिव = दग्धुमिच्छुरिव, अस्ताचलनिर्झराणम् = चरमगिरिजल प्रवाहाणाम्, शीतलजलानि = शिशिरवारींणि, पिपासुरिव = पातुमिच्छुरिव, वरुणदिशः = पश्चिमायाः दिशः, नेदीयान् = निकटस्थः, संवृत्तः = जातः अस्तोऽभवदित्यर्थः।

अत्र गद्ये उत्प्रेक्षालंकारः

इति एकादशो निश्वासः

## अथ द्वादशो निश्वासः

पृष्ठ—300 जातोऽयमरुणोदयः कलबिङ्कैरारब्धः।

**सन्दर्भ**—प्रातः अरुणोदय वर्णनपूर्वकं कविः निश्वासारम्भे चारुहासिनी सौवर्ण्योश्च वार्तालापं वर्णयति।

**व्याख्या**—अरुणोदयः = सूर्योदयः, जातः = अभूत्, कलविङ्कैः, = चटकैः, कलरवः = मधुरालापः, आरब्धः = कृत, तमः = अन्धकारम्, तनूभूतम् = क्षीणतां गतम्, धीरः = मन्दगतिः, समीरः = वायुः, इरंमदः = मेघज्योतिः, मयूरान् = शिखण्डिनः, मदयति = हर्षयति, मातंगमोहनम् = नववारिदराजवशीकरणम्, गन्धम् = सौरभम्, उद्गिरति = उद्वमति, नववारिदवारिभिः, नूतनजलधरपाथोभिः, सरसिता = सरसतामापादिता, रसा = विश्वम्भराः, वलाहकाः = मेघाः, मन्दं = मधुरं, गर्जन्ति = नदन्ति।

अस्मिन् समये = एतस्मिन्काले, तोरणदुर्गसमीपस्थः = तोरणदुर्गनिकटस्थः, सरोवरस्य = जलाशयस्य, प्रान्ते = तटे, शिवमन्दिरे = महादेवमठे, चारुहासिनी = एतन्नाम्नीयुवतिः, सौवर्ण्या (सह) = कौसलया (सह) आलपतिस्म = वार्तालापं करोतिस्म।

**पृष्ठ—331. अथ वारुणी संसर्गाधिक-शोणे पाश्चात्य पर्वतपंक्ति**

इति।

**सन्दर्भ**—दिल्ली नगरे अवरंगजीवस्य, नेत्रयोः रेणुकाराशि प्रक्षिप्य, ससहचरो शिवः सकुशलं ततो बहिरागतः। महाराष्ट्रराज्ये विशेषतः प्रतापदुर्गे तस्य स्वागताय आबाल वृद्धनारीणां महान् जनसम्मर्दः एकत्रितोऽस्ति। तत्र शिववीरः कथं प्रविष्ट इति वर्णयति कवि अथ वारुणीति।

**व्याख्या**—अथ=तदनन्तरं, वारुणी संसर्गेण=पश्चिमाशा सम्पर्केण, अधिकशोणे=अतिरक्ते, लज्जयेव=अतित्रपयेव, पाश्चात्य पर्वतपङ्क्तिरिव=पश्चिमस्थित गिरिश्रेणीव, जवनिका=प्रतिसीरः, तस्याः, अन्ते=अन्तराले, निलीने=अन्तर्हिते, चण्डमरीचि मण्डले=सूर्यविम्बे, चिरकर स्पर्शेन=चिरकालिक रश्मि संसर्गेण, उदीर्णैः=उद्गतैः, स्वेदैः=श्रमवारिभिः, स्नातवदनेषु=धौताननेषु, पटान्त संघर्षेण=वस्त्रकोण सम्बन्धेन, अधिक ताम्रकान्तिषु=अतिशयशोण च्छविषु, वीरेषु=भटेषु, परश्शतानाम्=शताधिकानाम्, वादित्राणाम्=वाद्यानाम्, वादनात्=ताडनात्, उद्भूतैः संजातैः, महाध्वनिभिः, महारवैः, बधिरीकृतेषु=कर्णव्याकुलीकृतेषु, दिगन्तरालेषु=दशदिग् भागेषु, सकलैः=सम्पूर्णैः, उद्ग्रीवैः=उत्कन्धरैः, विस्मृतात्मभिः=अतिशयतल्लीनैः, निर्निमेषनयनैः=अपलकनेत्रैः, भटानाम्, उत्साहम्=वीरत्वम्, सहस्र=सहस्रगुणं, गुणयन्=सम्वर्धयन्, चिर-विरह-विधुराम्=चिरकालिक वियोग खिन्नाम् आत्ममात्र शरणानाम्=निजाश्रितानाम्, जनानाम्=लोकानाम्, गात्रयष्टिम्=कृशशरीरम्, पुनरुज्जीवयन्=मुहुरुत्प्राणयन्।

दुर्दिनेन=दुष्ट समयेन, संशोषितस्य=कृत शोषणस्य, भारत सौभाग्यस्य=हैन्दवैश्वर्यस्य, पुनः=भूयः, अभिवर्षणेन=वृष्ट्या, हर्षमयम् मोदमयम्, अपरं=द्वितीयम्, दुर्दिनम् मेघाच्छन्नम् विरचयन्=निर्मापयन्, दिशोऽपि=ककुभानपि, हासयन्=निर्मली कुर्वन्, पृथिवीमपि=वसुन्धरामपि, पुलकयन्=रोमाञ्चयन्, आकाशमपि=गगनमपि, विकासयन्=दीपयन्, जगत्प्राणमपि=समीरणमपि, प्राणयन्=समीरयन्, द्रुम सन्दोहमपि=वृक्ष समहमपि, आनन्दयन्=हर्षयन्, ब्रह्मानन्दस्य=परमानन्दस्य, सोदर्यस्येव='तत्तुल्यस्येव, सुषुप्तेः=तुरीयावस्थायाः, आस्वादनेन=

रसनेन, स्पर्द्धिन इव=प्रतिद्वन्द्विन इव, साहित्यरसस्य=काव्यनाट्यादिगतरसस्य, रसनेन=आस्वादनेन, समुत्थितस्येव=समुद्भूतस्येव, कस्यचित्, लोकोत्तरस्य=अलौकिकस्य, महानन्दस्य=निरुपमहर्षस्य, निरुपमा=उपमा रहितः, परा-शोभा यस्मिन् एवंभूतः, परमप्रबाहपूरः=अत्युत्कृष्ट धारापुरः तस्य परम्पराभिः=तच्छ्रेणीभिः, प्रजाः=सन्ततयः, प्लावयन्=सरसयन्, आशीर्भिः=आशीर्वादैः, अभिनन्द्यमानः=संयोज्यमानः, कुसुमैः=पुष्पैः, आकीर्यमाणः=विकीर्यमाणः, जयध्वनिभिः—जयजय शब्दैः उन्मुखीक्रियमाणः=सम्मुखीक्रियमाणः, स्तूयमानः=स्तुतिगोचरी क्रियमाणः, गीयमानः=पुनः पुनरुच्चार्य्यमाणः, वर्ण्यमानश्च=चित्रणं क्रियमाणश्च, अस्मिन् सत्पथे=एतस्मिन् सौम्यमार्गे, महाराष्ट्रचक्रवर्ती=शिववीरः. न्यविशत=प्रविष्टः ।

अत्र गद्ये उत्प्रेक्षालंकारः ।

पृष्ठ—357. मातः काऽतःपरं प्रतीक्ष्यते दुर्दशा भारत—

सन्दर्भ—महाराजो जयसिंहः निज स्वप्नगत-वृत्तान्तं पत्रे लिखित्वा शिवं प्रैषयत् । तत् पत्रं वाचयित्वा माल्यश्रीकः शिववीरं श्रावयति यत् स्वप्ने महाराजः केन प्रकारेण भगवतीं प्रार्थयायास ।

व्याख्या—मातः=जननि ! अतः परम्=इतोऽप्यधिकं, भारतवर्षस्य हिन्दू देशस्य, का दुर्दशा=दुरवस्था, प्रतीक्ष्यसे=प्रतीक्षां करोषि, यदा=यस्मिन् काले, इमम्=दृश्यमानं, =बाहु-सहस्रभारम्=सहस्र-भुजाभारम् सफलीकरिष्यसि=दुष्टनाशनात् सकलं प्रदर्शयिष्यति । आः अहो ! आश्चर्यम्, पित्रोः=मातापित्रोः, पश्यतोः=अवलोकयतोः, बालाः=सन्ततयः, करपत्रैः=क्रकचैः, कर्त्यन्ते=छिद्यन्ते, रुदतः=रोदनं कुर्वतः, पत्युः=स्वामिनः, पत्न्यः=स्त्रियः, पात्यन्ते=भ्रश्यन्ते, भक्तानाम्=पूजकानाम्, हाहाकारैः=सकरुणरोदनैः, गगनतलमपि=आकाशमण्डलमपि, विदारयताम्=विदारणं कुर्वताम्, भगवन्मन्दिराणि=देवालयाः, चूर्ण्यन्ते=धूलिसात् क्रियन्ते । सोढविविध-बाधानाम्=अनुभूतानेकपीडानाम्, निरपराधानाम्=अपराध रहितानाम्, हीनानाम्=अकिञ्चनानाम्, दीनानाम्

= दलितानाम्, रक्तैः = रुधिरैः, भगवती वसुन्धरा = भगवती पृथिवी, रक्ता क्रियते = लोहिता सम्पाद्यते । देवि = भगवति ! निजतनयेषु = स्वकीय पुत्रेषु, समापादितः, सम्पादिताः, इमाः = एताः, दुर्दशाः = दुरवस्थाः पश्यन्त्यपि = अवलोकयन्त्यपि, न = नहि, पश्यति = अवलोकयति, रोदसी = द्यावापृथिव्यौ, रोदयत् = क्रन्दयत्, अदः = एतत् रोदनम् = क्रन्दनम्, शृण्वन्त्यपि = आकर्णयन्त्यपि न, शृणोषि = नाकर्णयसि, मातेव = जनन्येव, समुपेक्षसे = उपेक्षां क्रियते चेत्, कोऽन्यः = कोऽपरः, बालान् = शिशून्, रक्षितुम् = गोपायितुम्, अपेक्षेत = अभिलषेत् !

**पृष्ठ—370. महामङ्गलमयं दिनमिदं सौवर्णो विवाहस्येति—**

**सन्दर्भः**—कविः सौवर्णी-रघुवीरयोः परमोल्लासमयं प्रीतिप्रदं विवाहोत्सवं वर्णयति, यत्र सर्वे उल्लासमया दृश्यन्ते स्म । सर्वथा कथनीयं हर्षमयं दिनमिति प्रदर्शयति कविः—

**व्याख्या**—सौवर्णी-विवाहस्य = कौसलायाः. पाणिग्रहणस्य, दिनमिदम् = दिवसमिदम्, महामंगलमयम् = परमशुभमयम्, नवाधिकृत राज्यस्य = नवम् = नूतनं, अधिकृतम् = अधिष्ठितम्, राज्यम् = शासनैश्वर्यम् येन तस्य = नूतनप्राप्त-राज्यैश्वर्यस्य, राज्ञः = भूपतेः गौरसिंहस्य = सौवर्ण्याः ज्येष्ठभ्रातुः, नवासादित प्रासादस्य = सद्यः प्राप्त हर्म्यस्य, परिष्कार शोभा = अलंकार सुषमा, केन वा = कविना, वर्णनीया = कथनीया, स्यात् = भवेत् । अस्मिन् प्रासादे = एतस्मिन् हर्म्ये, प्रतिद्वारम् = द्वारं द्वारं प्रति, प्रत्यङ्गणम् = प्रत्यजिरं, प्रतिशालम् = प्रतिकोष्ठम्, प्रत्यट्टम् = प्रत्यट्टालिकम्, प्रति प्रघणञ्च = प्रत्यलिन्दञ्च, रम्भास्तम्भाः = कदलीस्तम्भाः, मंगलकलशाः = मांगलिककुम्भाः, अशोक पल्लवतल्लजानाम् = अशोक प्रशस्तकिसलयानाम्, आवली = पङ्क्तिः, प्रतिस्तम्भम् = स्तम्भम् स्तम्भम्, परिवेष्टयन्त्यः—वलयिताः, कुसुमिताः पुष्पिताः, बल्ली मतल्लिकाः = प्रशस्ता व्रततयः, प्रतिकलशम् = प्रतिमांगलिकघटम्, कुङ्कुमकस्तूरी चन्दनानाम् = काश्मीर-केसर-मृगमद-पाटीराणाम्, चर्चामर्चिकाः = मनोहराणि रूपाणि, प्रतिगवाक्षम् = प्रति वातायनम्, यक्ष कर्दमः = एकीकृतं कर्पूरादि,

वृकधूप: = दशाङ्गधूप:, घनसारधूप: = कर्पूरधूप: एतेषां धूमै:, उद्भूता: = उत्थिता:, घना: = सान्द्रा:, ये घनघनोद्धा: = प्रशस्ता: वर्षुकवारिदा:, प्रतिकुञ्जम् = प्रतिलतापिहितोदरम्, मांगलिकानाम् = मंगलप्रयोजनानाम्, मण्डनानाम् = अलंकरणानाम्, प्रकारा: = भेदा:, प्रति चन्द्रशालम् = प्रति-शिरोगृहम्, दोधूयमाना: = भृशं कम्प्यमाना:, ध्वजा: = पताका:, परित: = समन्तत:, मंगलमिव = मांगलिक द्रव्यमिव, वर्षन्ति स्म = उद्वमन्ति स्म ।

परित: = समन्तत:, सुदूरपर्य्यन्तम् = अतिदूरं यावत्, केतकीसौरभेण = केतकसुगन्धेन, सुरभीकृतै: = सुगन्धतामापादितै:, अम्भोभि: = जलै:, परिसिक्ता: = सर्वत: आर्द्रीकृता:, पन्थान: = मार्गा:, खेचराणामपि = गगनचारिणामपि, घ्राणान् = नासिका:, तर्पयन्ति स्म = तृप्तान् कुर्वन्ति स्म ।

अत्र गद्ये मंगलमिव वर्षन्ति स्म इत्यत्र उत्प्रेक्षालंकार: ।

इति द्वादशो निश्वास: ।

**शुभं भूयात्**

———

# समालोचनात्मकाः प्रश्नाः

प्रश्न 1. "गद्यं कवीनां निकषं वदन्ति" इति युक्ति-युक्तं समर्थ्यताम् ।

उत्तरम्—सर्वासां भाषाणां जननी संस्कृतभाषेति कथ्यते । संस्कृतभाषा संसारस्य सर्वाभ्यः भाषाभ्यः महनीयतरेति नाऽत्र संशय; । संसारे सर्वप्रथमं कवितायाः काव्यस्य, महाकाव्यस्य, नाटक-कथाख्यायिकानां चाविर्भावो अस्यामेव भाषायां जातः । वैदिक-साहित्ये गद्यमवतीर्य जगति निजविकासं व्यकासयत् संसारे साम्राज्यमपि प्राप ।

विशेषतः साम्प्रतमप्यस्यैव साम्राज्यं सर्वासु भाषासु दृश्यते । अधुना भारतीय जनभाषासुगद्यस्यैव प्रभुत्वं दृश्यते । गद्ये हि कथाख्यायिकोपन्यासग्रन्था निर्मीयन्ते । अतः गद्यस्यायं युग इति कथ्यते । संस्कृत साहित्येगद्यस्यातिमहत्वं विद्यते । नाविदितं केषाञ्चित् विदुषां यत् महामान्याः स्वनामधन्याः, सुबन्धु-वाणदण्डिनो महाकवयः संस्कृते समभूवन् । सुधाधिकमधुराणि गद्यकाव्यानि निर्मितवन्तश्च । यद्यप्येमां प्रशस्तिमवलोक्य केषाञ्चित् समालोचकानां कथनमिदं यत् गद्यं कवीनां निकषं वदन्ति, नितान्तं सत्यं प्रतिमाति । ननु कास्ति गद्ये एतादृशी विशेषता यया पद्यापेक्षया गद्यं वैशिष्ट्यं भजते ? निकषञ्च मन्यते, इत्यपेक्षया सूक्ष्मदृष्टिभिः विवेचनमावश्यकम् ।

युगोऽयं वैज्ञानिकः । सर्वे द्रुतगति सरलोपायञ्च मनोरञ्जनस्य अपेक्षन्ते । पद्ये छन्दोनिगडवद्धो भवति कविः । गुणरीत्योः कठोर शासनं भवति तत्र । अतः नियन्त्रितैः नियमिताक्षरैः प्रकटनमतिकठिनं विद्यते । बलोऽत्र कविः यमाशयं शतपङ्क्तिभिः प्रकटयितुं शक्नोति तमेव

पद्ये कतिपयाभिरेवपङ्क्तिभिः श्लोकार्धं पादैर्वा प्रकटयति: अतः स्वाभाविकम् तत्र काठिन्यम् ।

छन्दोऽलंकार-गुणरीति-भावैः भरितं पद्यं पठित्वा सर्वसाधारणो जनः तत्र काव्यार्थावगमे सर्वथाऽसमर्थः। परमत्र गद्ये नास्ति तादृशं किमपि वन्धनम् । स्वतन्त्रो भवति लेखकः । छन्दो नियमिताक्षरमात्रयोः परिगणनम् नात्यावश्यकम् । विशदीकृत्य विषयः गद्ये प्रस्तूयते । सर्वसाधारणो जनः अनायासेन आस्वादते काव्यरसम् । अतः सौकर्यात् गद्ये चमत्कारपूर्णं सुन्दरान् कमनीयान् विचारान् प्रकटयितुं शक्नोति कविः ।

काव्यस्य द्वौ भेदौ दृश्यं श्रव्यञ्च, तत्र खलु नाटके गद्यस्य प्रयोगात् सर्वजनाह्लादकत्वाच्चैवेह काव्येषु नाटकं रम्यमित्युच्यते ।

गद्यकाव्यस्यानन्दो विचित्रो भवति । कादम्बरीमधीत्य गद्य-काव्यस्यानन्द-सागरे निमज्य अलंकारचषकैः सुरारसमिव काव्यरसं पीत्वा मदमत्तो भवति काव्यरसिकः ।

सत्यमुक्तम् = **कादम्बरी रसभरेण समस्त एव मत्तो जनः ।**

**न किञ्चिदपि चेतयते जनोऽयम् ॥**

शिवराजविजयस्य राष्ट्रविभावनोत्पादकं सरसं, चमत्कारपूर्णं गद्यं विलोक्य केषां चित्तं चमत्कृतं न भवति । प्राच्याधुनिकशैल्याः सन्निवेशेन काव्यमिदं रस-रसायनमिवाऽऽस्वाद्यते । एवं कियद् वर्णयामः गद्यस्य वैशिष्ट्यम् ।

गद्यस्यैवं वैशिष्ट्यं विलोक्य यदुक्तम् केनचित् काव्यमर्मज्ञेन—गद्यं कवीनाम् निकषं वदन्ति, इति सत्यमेवेति ।

**प्रश्न :—2. शिवराजविजयमधिकृत्य तात्कालिक सामाजिकदशायाः वर्णनं कुरुत ।**

उत्तरम्—**शिवराजविजयः** ऐतिहासिकं राष्ट्रीयभावनापरिपूर्णं च गद्य-

काव्यं विद्यते ।

महाराज शिववीरस्य जीवनस्य दशवर्षाणां घटनाऽत्र वर्णितास्ति। काव्यस्य देशकाल सूचनार्थं कविः सौवर्ण्याः सप्तमवर्षतः आरभ्य षोडश-वर्षदेशीयावस्थां यावत् जीवनघटना अवर्णयत् । दशवर्षाणां सामाजिक-दशा काव्ये साधु चित्रितास्ति ।

अस्मिन् समये भारतस्य सामाजिकी दशा अतिविपन्ना शोचनीया चासीत् । यतो हि युगोऽयं लुण्ठकाक्रमणस्य, धार्मिकविप्लवस्य राजनैतिका-स्थिरतायाश्चासीत् । भारतस्य दशां संस्मृत्य ब्रह्मचारि गुरोः कथनमिदं सत्यं प्रतिभाति—

**भगवन् ! दम्भलिघटितेयं रसना, या दारुणदानवोदन्तोदीरणैर्न दीर्य्यते, लौहोसारमयं हृदयं, यत् संस्मृत्य यवनानां परः सहस्रान् दुराचारान् शतधा न भिद्यते, भस्मसाच्च न भवति ।**

भारतीया दीनाः हीनाः निर्धनाश्चासन् । ऐक्याभावात् भारतीयसमाजः पारस्परिक-द्वेषेण विशिथिल-एव समभूत । सर्वेषां सम्मुखे जीवननिर्वाहसमस्या प्रधानासीत् । भारतीय वर्णव्यवस्थायाः परम्परापि विशिथिलैवासीत । ब्राह्मणाः अपि स्वजीवन निर्वाहाय, उदरदरी पूर्त्यर्थञ्च दौत्यादिकार्यं कुर्वन्ति स्म । गोपीनाथ पण्डितः यवनशासकस्य दूतत्वं करोति । शिववीरः यदा तस्य प्रशंसां स्तुतिं च करोति तदा गोपीनाथ पण्डितस्य कथनमिदं—"**वीर ! साम्प्रतं नाहं पण्डितत्वेन वा समायातोऽस्मि, किन्तु यवनराजदूतत्वेन । वीर ! कलिरेष कालः यवनाक्रान्तोऽयं भारतभूभागः, तन्नास्माकं तानि तेजांसि यथा वर्णयसि । साम्प्रतं तु विजयपुराधीश-वित्तीर्णां भृत्तिं भुञ्जे इति तदाज्ञामेव परिपालयामि**" तात्कालिक ब्राह्मण-समाजस्य दशैव प्रकटयति कथनमिदम् । ब्राह्मणसमाजेषु द्वितीयो वर्ग एतादृशोऽपि आसीत् यः भूषणकविरिव राजकीय-सुखं परित्यज्य प्रतिष्ठायै स्वदेशजात्योरभिमान-रक्षितं शिववीरस्याश्रयं स्वीकरोति ।

क्षत्रियजातेरपि आर्थिकदशा विपन्नासीत् । निर्धनता पीडिताः क्षत्रियाः

स्वजीवन-निर्वाहाय अनुचरता कार्यं कुर्वन्ति स्म। रघुवीरसिंहः सर्वोच्च कुलोत्पन्नोऽपि अनुचरताकार्यं करोति। समाजे कार्यमिदं व्रीडावहमिति मत्वा आत्मानं रघुवीरसिंह इति नाम्ना परिचाययति। कन्यापहरणम् अस्मिन् काले विशेषरूपेण भवति स्म। रूपवतीनां कन्यानाम् अल्पवयस्कानामपि अपहरणं भवतिस्म। सौवर्ण्याः सप्तवर्षीयायाः अपहरणमस्योदाहरणं प्रस्तौति। रसनार्याः अपहरणं प्रकटयति यत् राजकुमारीणामपि अपहरणं नाऽसंभवमासीत्। सतीत्वध्वंसनमपि अस्मिन् काले भवति स्म। बलात्कारः मदिरापानं द्यूतखेलनम्, वेश्यागमनम्, नर्तनञ्च एता सर्वा अपि दुर्वृत्तयः समाजे दरीदृश्यन्ते।

समाजे लुण्ठकवृत्तिश्चासीत्। लुण्ठकाः पथिकान् लुण्ठन्तिस्म। गौरश्यामसिंहयोरपहरणं अस्य प्रमाणम्। लुण्ठकैः सुन्दरबालिकाः बालकाश्च विक्रीयन्ते स्म। यवनशासकाः भारतीयानां कृते कठोरशासनं कुर्वन्ति स्म। पश्यतोः पित्रोः सम्मुखे बालानां हत्या, रुदतः पत्युः प्रत्यक्षे पत्न्यः पात्यन्ते स्म। एवं सामाजिकीदशा परमविपन्नासीत्।

**प्रश्न 3. शिवराजविजयमधिकृत्य व्यासस्य गद्यशैलीं काव्यवैशिष्ट्यञ्च वर्णयत।**

उत्तरम्—विपुलेऽस्मिन् संस्कृत-साहित्ये ऐतिहासिकोपन्यासानां गद्यकाव्यानाञ्च प्रायोऽभाव एव दृश्यते। यद्यपि बाणस्य हर्षचरितं नाम गद्यकाव्यम् ऐतिहासिकं विद्यते तथापि यादृशी उदात्तकथा, राष्ट्रीय-भावना, देशभक्तिश्च शिवराजविजये दृश्यते न तादृशी क्वापि हर्षचरिते अन्वेषणेनापि मिलति, अतः सर्वथाऽद्वितीयं निरुपमं ऐतिहासिकं गद्यकाव्यं शिवराजविजयो नामेति कथने नातिशयोक्तिः। शिवराजविजये व्यासस्य शैली प्रशंसनीयास्ति। नच व्यासेन पुरातन गद्यशैली आमूलतः परित्यक्ता न वा चक्षुषी निमील्य स्वीकृतैव, अतः उभयात्मिका गद्यशैली अम्बिकादत्तेन स्वीकृता। परिष्कृतशैल्याः प्रसादेन, आधुनिकोपन्यास कलासन्निवेशेन च सामायिकं, आधुनिकञ्च काव्यमिदं जातम्। व्यासस्य

भाषा उत्तमोत्तमा, ओजस्विनी, अर्थपूर्णा, सुबोध्या च वरीवर्ति, यथावसरं भाषा कुत्रापि उद्दाम दीर्घ-समास पूर्णा भवति, कुत्रापि च समास-रहिता, कोमला, प्रभावशालिनी भवति । औचित्यानुसारेण नवरसाः निवेशिताः सन्ति । तत्रापि वीररसस्याधिक्यं विद्यते । अर्वाचीन साहित्ये प्रायः वीर-रसानामभाव एवासीत् । काव्येऽस्मिन वीरो मुख्यः ।

शृंगारोऽपि सर्वथा सात्त्विकः, प्रीतिप्रदः दृश्यते, कुत्रापि अश्लीलता दोषो नास्ति ।

युद्धप्रसङ्गे रौद्र-वीभत्स भयानकः यथास्थानं पाठकानां मनो हरन्ति ।

राजनीतेः गूढतमं कौशलं चातुर्यपूर्णं रणकौशलं च अतिप्रशंस-नीयं विद्यते । काव्यस्य कथा ऐतिहासिकी, विशेषतः वास्तविक घटनाऽऽ-धारभूतास्ति । अन्यत काव्येष्विव कपोलकल्पिता नास्ति । काव्ये देश-भक्तिः, जन्म-भूमि-भक्तिः, राज-भक्तिः, प्रजाभक्तिः, धर्मभक्तिश्च यथा दृश्यते तथा प्राचीन-साहित्ये सर्वथा सुदुर्लभेव प्रतिभाति । भारतीय-राष्ट्रीयभावनापूर्णं गद्यकाव्यमिदं सर्वाणि प्राचीन गद्यकाव्यानि अति-शेते । व्यासस्य शब्दशय्या अतिमनोहरा, लघु-लघु शब्दप्रयोगेन चम-त्करोति चित्तम् यथा—**समयोऽयं महामहिम हिमाच्छन्न शिखिरस्य । ऋतु-नैतेन दिनानां परिणाहः, तमीनां तनुता पयोजानां प्रसन्नता, सलिलानां सुखावगाहता च लुण्ठिता । भगवान् भास्करो दक्षिणस्यां निर्वासितः**, इत्यादौ प्रसाद गुण-गुम्फितानां शब्दानां चमत्कारः दर्शनीयो विद्यते ।

कुत्रचित्स्थले दीर्घसमस्तशब्दानां वाक्यविन्यासः वाणस्य कादम्बरीं स्मारयति । दृश्यताम्—'**वैरि व्रात-घात कृपा-कृपण-कृपाण-धारावलीढ़ भारत-प्रत्न सपत्न-व्यग्र ग्रीवाग्र-विगलत् कवोष्ण-शोण-शोणित-चन्दन-द्रव चर्चित भूभागेषु**''—इत्यादौ दीर्घसमासच्छटा, सालंकारिकशब्दानां वाक्यविन्यास; केषां सचेतसां चित्तं न आह्लादयति ? किन्तु दीर्घसमासेऽपि अपरिचित शब्दो न दृश्यते । यथा कादम्बर्यादौ शब्दारण्यानीषु परिचित-

शब्दार्थ-ज्ञानं दुर्लभम् भवति न तथाऽत्र ।

एवं क्वान्तं वर्णयामः—शिवराजविजयस्य वैशिष्ट्यम्--सफलं, अद्वितीयं, आधुनिकञ्चेदं गद्यकाव्यमस्तीति दिक् ।

**प्रश्न 4. शिवराजविजयानुसारं देशस्य राजनैतिक दशायाः वर्णनं कुरुत ।**

**उत्तरम्**—शिवराजविजये, राजनैतिक—दशायाः स्वरूपं यादृशं पश्यामः, तदनुसारेण वक्तुं शक्नुमः, यत् भारते कुत्रापि एतादृशी शासन-व्यवस्था नासीत्, यया देशे 'एकता' सुदृढ़ा भवेत। संघे शक्तिः कलौ युगे, इति मूलमन्त्रं भारतीय राजानो व्यस्मरन् । शासकाः, प्रजाः, देशरक्षकाः भटाः तथा बुधजनाश्च सर्वेऽपि निजकर्तव्यं विस्मृतवन्तः । एवं विशिथिलित-शासनेषु, पारस्परिक द्वेष-ग्रस्तेषु राजसु विदेशीयाः यवनाः भारते निजशासनं सुदृढ़मकुर्वन् । यथा ब्रह्मचारिगुरुः कथयति योगिराजम्— "पारस्परिक-विरोध, विशिथिलीकृत, स्नेह-बन्धनेषु राजसु, भामिनी भ्रूभङ्ग भूरिभाव प्रभाव पराभूत वैभवेषु, स्वार्थचिन्ता सन्तानैकतानेषु अमात्य-वर्गेषु, प्रशंसामात्रप्रियेषु, प्रभुषु, इन्द्रस्त्वं वरुणस्त्वं कुवेरस्त्वम् इति वर्णनासक्तेषु बुधजनेषु, महामदो यवनः भारते प्राविशत् । चित्रमिदं भारतस्य राजनैतिकदशायाः स्वरूपं प्रस्तौति । तस्मिन्काले विशेषतः भारते द्वावेव राजानौ, पृथ्वीराज जयचन्द्रौ प्रधानभूतौ शासकौ आस्ताम् । एतौ द्वावपि पारस्परिक विरोधग्रस्तौ विस्मृत राजनीतिकौ इति दुर्भाग्यं देशस्य ।

एतौ विनाश्य यवनाः निजशासनतन्त्रं विस्तारयामासुः । तस्मिन् काले क्षत्रियाः एव देशस्य शासकाः । तेषु क्षत्रियेषु केचित् यवनैः पराजिताः, केचित् तस्याधीनतां स्वीकृत्य हिन्दुभिः राजभिः सह योद्धुं तत्पराः आसन् । आमेरदेशाधीशः मरुधराधीशश्च शिववीरेण सह योद्धुम् समायातौ ।

अयोध्या प्रान्तस्थाः क्षत्रियाः परवशाः संवृत्ताः । बंगदेशे क्षत्रिया

एव नासन् । सन्तोऽपि युद्धविद्यां न जानन्ति स्म । केषुचित् प्रदेशेषु, यवनाः एव प्रधानशासकाः आसन् । तस्मिन् काले आमेराधीशः मानसिंहः यद्यपि प्रधानवीरः देशस्य तथापि यवनैः सह आत्मानं सम्बन्धसूत्रैः बद्ध्वा भारतीय भूपतीन् विजित्य यवनहस्ते समर्पयति स्म ।

श्रेष्ठवीराः क्षत्रियाः राजानः जयसिंहादयः यवनशासकस्याधीनतां स्वीकृतवन्तः । एवं प्रकारेण भारते यवनशासकस्याविरोधकाः नासन् ऋते शिववीरात् राघवाचार्यस्य कथनमिदं सत्यं प्रतिभाति —

**राजपुत्र-देशीया राजानोऽप्येते कन्यादानैः यवनैरात्मानं सम्बध्नन्तः धैर्यवता एव । ये स्वतन्त्रान् आर्यदेशान् विजित्य यवनहस्ते समर्पयन्तः वीरम्मन्यतया श्मश्रु परिमृशन्ति ।**

अनेक प्रकारेण भारते सर्वे क्षत्रियाः राजानः यवनस्याधीनतां गता आसन । कोऽपि क्षत्रियः महाराष्ट्रराजस्य शिवस्य सहायकोऽपि न भवति स्म । केवलं यशस्विसिंहोऽस्य सहायतां कर्तुं उत्साहं कृतवान् । तस्मिन् काले यदि देशे एकता स्यात्, राजानः क्षत्रियाः एकीभूय युध्येरन् तर्हि यवनानां पराजयः नासंभवः । माल्यश्रीकस्य कथनमिदं सत्यम्-दृश्यताम् **"ऐक्यमेव न भवति अस्मद्देशीयताम् यदि नाम सर्वेऽपि भारताभिजन वीरवराः सह युञ्जेरन् तद्वयं क्षणेन पारावारमपि मरूकुर्मः । बन्धुभिरपि कृत-वैरस्य महानीचस्य एतस्य मर्दनं तु को नाम कठिनो व्यापारः ।"** अतः एवं प्रतीयते यत् देशे वीराः राजानः आसन् परन्तु ऐक्याभावात् देशस्य राजनीतिक-दशा छिन्नभिन्नासीत् ।

**प्रश्न—5. शिवराजविजयमधिकृत्य देशस्य धार्मिकदशायाः वर्णनं कुरुत ।**

उत्तरम् —पूर्णतः पराधीनतापूर्वं देशस्य यादृशी धार्मिक-दशासीत् सा दशा काव्ये साधु चित्रितास्ति । परतन्त्रतायाः प्रारम्भिकोऽयं कालः । आक्रामकाः यवनाः विदेशीयाः प्रथमं धनेच्छयैव भारते आक्रमन्, पश्चात् भारते शासनं स्थापितवन्तः ।

विधर्मिण एते हिन्दुधर्मं ध्वंसयितुं यथाशक्तिं प्रयत्नं कृतवन्तः। भारते तीर्थस्थानेषु, धार्मिक मठमन्दिरेषु प्रचुरं धनमासीत्; अतः यवना मन्दिराणि निपात्य इष्टदेवमूर्तीः भङ्क्त्वा धनं जगृहुः। शासनारूढ़ाः भूत्वा यवनाः भारते धार्मिक-स्थानानि, धर्मग्रन्थांश्च, ध्वसयितुं प्रारेभिरे। धार्मिक-चित्रणं कुर्वन् लेखकः लिखति—

"अद्य हि वेदा विच्छिद्य वीथिषु विक्षिप्यन्ते। धर्मशास्त्राणि उद्धूय धूमध्वजेषु ध्मायन्ते, पुराणानि पिष्ट्वा पानीयेषु पात्यन्ते, भाष्याणि भ्राष्ट्रेषु भर्ज्यन्ते, क्वचिन्मन्दिराणि भिद्यन्ते, क्वचित् तुलसीवनानि छिद्यन्ते। भारतस्य धार्मिकदशायाः चित्रमिदम् अतिविचित्रं विद्यते। गुर्जरदेश चूड़ायितस्य सोमनाथ मन्दिरस्य नाशः केषां धार्मिकजनानां हृदयं न विदारयति। मूर्तिखण्डनं विशेषरूपेण भवति स्म। सोमनाथ मन्दिरस्य महादेव प्रतिमायाः खण्डनम् येन प्रकारेणाऽभवत् तत् के विस्मर्तुं शक्नुवन्ति।

देशस्य प्रसिद्धानि, सर्वाणि मठमन्दिराणि यवनैः धूलीसात्कृतानि। काश्यां विश्वनाथ मन्दिरं बिन्दु माधव-मन्दिरं, वृन्दावनस्य गोविन्दमन्दिरं इत्यादीनि मन्दिराणि अस्मिन् काले दूषितानि अभवन्।

यवनैः हरिहर निन्दाशब्दैः आपूर्यत वसुधा। भारतीयाः रामनामानि उच्चारयितुं समर्थाः नासन्। तिलकादि धारणेऽपि यवनानां प्रतिबन्ध आसीत्। माल्यश्रीकस्य कथनं-यथा—अहह! सम्प्रति बहवः सरोदनं सकष्टं तिलकादि धारण मर्यादां त्यक्तवन्तः इत्यादीनि ज्वलन्त उदाहरणानि सन्ति।

माल्यश्रीकस्यैव कथनमिदं "परस्कोटयो मूर्त्तयो भज्यन्ते, असंख्यानि मन्दिराणि भूमिसात्क्रियन्ते, राशीकृतानि वेदादि पुस्तकानि ज्वालाज्वालैः ज्वाल्यन्ते।" यवनस्य क्रूरता, धार्मिक दशायाः दृश्यञ्चोपस्थापयति।

धर्मप्राणः देशोऽयं भारतः यवन-शासकाः वाञ्छन्ति स्म यत् एतद्-देशीयधर्मं विनाश्य, निज धर्मस्थापनेनैवास्माकं शासनं सुदृढं भविष्यति।

कृतप्रयत्नेनापि भारते मन्दिरखण्डनं, मूर्तिभञ्जनम् तु जातम् परन्तु लोकानां धार्मिकभावना न गता। भारतीयैः धार्मिक विश्वासो न त्यक्तः। अत एव ब्रह्मचारि गुरोः पुत्र प्राप्तये अनुष्ठानम् शिवस्य क्षेमाय जनानां रुद्राभिषेकः, चण्डीपाठं एतत्सर्वमपि भारतस्य धार्मिक-विश्वासं प्रकटयति। यवनानां शासकत्वेऽपि भारते कर्मकाण्ड-पद्धतिः प्रचलितासीत्। वर्णाश्रम-व्यवस्था पूर्ववत् येन-केन प्रकारेण प्रचलितासीत्। एवं प्रकारेण शिवराज-विजये धार्मिक दशायाः चित्रणं विलोक्य प्रतीयते यत् भारते धार्मिक-भावना सर्वदा अक्षुण्णेवासीत्।

**यतो धर्मः ततो जयः** इति भारतस्य पुरातनी-पद्धतिः यवनानां प्रयत्नैः न त्रुटिता।

————